THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

*No. 46*

( PART I )

—o—

EDITED BY

GOPI NĀTH KAVIRAJ, M. A.

---

THE

# KĀVYA PRAKĀS'A

( PART I )



*Printed by Jai Krishna Das Gupta*
*Vidya Vilas Press, Benares City.*

1933

श्रीमम्मटाचार्यविरचितः

# काव्यप्रकाशः

श्रीचण्डीदासकृतदीपिकाटीकोपेतः ।

साहित्यशास्त्रिणा श्रीशिवप्रसादभट्टाचार्येण सम्पादितः ।

---

THE

# KĀVYA PRAKĀS'A

OF

MAMMAṬĀCĀRYA

( PART I )

With

THE COMMENTARAY DĪPIKĀ

of

CAṆḌĪDĀSA

Edited with Foreword, Notes etc.

By

S'IVAPRASĀDA BHAṬṬĀCĀRYA,

KĀVYATĪRTHA, SÂHITYAS'ÂSTRĪ, M. A., B. T.,

Professor, Presidency College, Calcutta.

---

1933.

# FOREWORD.

It was early in 1927 that through the courtesy and unfailing kindness of Dr. S. N. Dasgupta (now Principal, Sanskrit College, Calcutta) I could get for loan the copy of India office manuscript of Caṇḍīdāsa's commentary on the "*Kâvyprakâs'a*", a work highly appraised by later commentators and drawn upon for more than four centuries by many a writer on Alaṅkāra-S'āstra. In 1928 while I was at Puri, Mahāmahopādhyāya Pandit Sadaśiva Miśra told me that one of his acquaintances had been able to procure two Mss:-viz. Caṇḍīdāsa's *Kâvyaprakâs'adīpikâ* and Viśvanātha's "*Kāvyaprakās'a-darpana*" from Harekrisṇapura, a village a few miles from Puri, reputed in local tradition, to be the native place of these writers. The Orissa Mss. of Caṇḍīdāsa's commentary, which I got copied, was a short incomplete copy, reaching up to a small portion of *Ullâsa* II. In 1928 I talked of this work to my esteemed friend Pandit Gopinath Kaviraja who asked me to prepare a press copy of the same and add necessary notes. Some months latter he wrote to me officially intimating the inclusion of the work in the Princess of Wales Sarasvati Bhavana Series started by him. When the work of printing had just commenced, I happened to come across ( in 1929 ) another Mss. of the work in the collection of the Asiatic Society of Bengal, Calcutta, an incomplete but fairly old ( about 250 years old ) and reliable copy beginning from the 5th *ullâsa* and running up to the end*

---

* My pupil Dr Prabodh ch. Lahiri, M. A., Ph. D. ( London ) wrote in 1932 intimating that no other Mss. of the work is known to exist in the United Kingdom.

The task of editing has not been an easy one, as the I O. Mss. though fairly old, it or its original being transcribed in S'aka 1728 ( i. e, 1806 A. C. ) and in neat handwriting, contains many glaring mistakes, occasional omissions and lacunae. It is to be noted that this commentary of Caṇḍīdāsa has been the main source of inspiration, nay it has been copied down sometimes even to the nicest details in the *Sâhityadarpaṇa*, the work next in importance to the *Kâvyaprakâs'a* and not less popular, by Viśvanātha Kavirāja belonging to his family and his junior by only about 50 years. A careful perusal of the commentary with its wealth of information and boldness and sobriety in judgment would bear out the ample boast held out for it.*

My pupil Mr. Prakash C. Lahiri, Kāvyatīrtha, M. A., now Research Scholar in Alaṅkāra in the Dacca University, has helped me in preparing a press copy for the part now being presented to the learned public. The printing has been done under great disadvantage and difficulty. Credit, however, must be given to the ' Vidya Vilas Press",for the ungrudging care with which they have done it. The editor has had to suffer from severe mental strain and worry, culminating in what is the saddest bereavement that can befall a man. He however looks forward to the learned public for the same encouragement and help as they gave to his other work the *Alankārakaustubha* edited by him for the Varendra Research Society of Bengal.

---

* काव्यप्रकाशतरुरेष कुसम्प्रदायव्याख्याविलोलमरुदाकुलितप्रतानः
सिक्तः पुनश्च प्रतिपल्लवतामुपैतु श्रीचण्डिदासकविवागमृतप्रवाहैः ॥

The spelling of the commentator's name with the short '*i*' is occasionally met with.

ॐ नमः शिवाय ।

# काव्यप्रकाशः ।

## श्रीचण्डीदासकृतदीपिकाटीकोपेतः ।

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—

---

## काव्यप्रकाशदीपिका ।

श्रीकृष्णो जयति ।

सुरारिवक्षोविक्षोभप्रारम्भस्फारडम्बरः ।
क्रीडासिंहस्वरूपस्य हरेः स्ताद्वो विभूतये ॥
श्रीचण्डीदासकविवाक्कौमुदीसारनिर्मिता ।
भूयात् काव्यप्रकाशस्य दीपिका कृतिनां मुदे ॥
श्रीमल्लक्ष्मणभट्टानां सुहृदामनुशासनात् ।
ध्वनिप्रकरणस्यास्य रहस्यं वर्णयामहे ॥

प्रारिप्सितनिर्विघ्नपरिसमाप्तिहेतुभूताविगीतशिष्टाचारपरम्पराप्राप्तस्वाभीष्टदेवताप्रसादनपरत्वं प्रथमकारिकायाः प्रकाशयअवतरणिकामाह वृत्तिकृत्—ग्रन्थेति । अभ्यस्यमानविषयं महावाक्यं(१)ग्रन्थः, तस्यारम्भेऽव्यवहितपूर्वकाले विघ्नस्य निर्वर्त्तक-

---

(१) महाकाव्यं, "क" पाठः ।

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।

---

सुचरिताभावस्य निवर्त्तकदुश्चरितसद्भावस्य वा(१)विघाताय निः-शेषमुच्छेदायेत्यर्थः । समुचितेति प्रकृतवाङ्मयाधिकृतत्वात् । इष्टेति तत्प्रसादाविष्कारोपयिकनमस्कर्तृगतभक्तिश्रद्धाप्रकर्षसूचनम्(२) । देवतामिति । जडरूपवाङ्मयमात्रवैलक्षण्येनाभिप्रेतप्रयोजन-सम्पादनक्षमाम् । ग्रन्थकृदित्यधिकारिप्रकटनम् । परामृशति आराधनाय सम्मुखीनां कृत्वा स्वार्थनिर्वाहाय प्रयोजयतीत्यर्थः । नियतिकृतेति । नियम्यन्ते स्वस्वकार्योत्पत्तये प्रेर्यन्ते नि-रुध्यन्ते च भावा अनयेति नियतिरदृष्टं, तत्कृतो नियमः काल-देशाधिष्ठानत्रयोऽवस्थाऽऽदिवैषम्यात् सुखादिजननविकल्पः— न चायं कविभारत्यां सम्भवति, लोकोत्तरविभावादिशरीराणां वक्रोक्तीनां रत्याद्यंशसंवलितप्रकाशानन्दमयापूर्वतरचमत्कारा-विष्कारनैयत्येन, तादृग्भावेषु वा, वैषम्याभावात् । कथं तर्हि शोकरोगार्त्तकुपितमत्तव्यासक्तादीनां काव्यस्वादापकर्षः सुस्थ-दशाऽपेक्षयेति चेत्, दुरभिमानिन् अनवबोधग्रस्तोऽसि, न खलु वयमन्वयव्यतिरेकसिद्धकारणभावस्य परिदृष्टसामर्थ्यस्य रोग-व्यासङ्गाद्यभावस्य रसास्वादप्रकर्षसामग्र्यन्तर्निवेशं नाङ्गीकुर्याम, किं तर्हि कर्हिचनापि कविनामापूर्वप्रजापतिनिर्मीयमाणस्य काव्य-

---

(१) च 'ख' पाठः ।

(२) सूत्रणम् "क" पाठः ।

नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥१॥

नाम्नो विलक्षणप्रपञ्चस्य न विद्यते दुःखमोहात्मकत्वं, पुत्रशोकादिगाढवेदनाजनितजडिम्नोऽपि पुरुषस्य द्राक्(१)कर्णप्रवेशानन्तरमास्वादायोगव्यवच्छेददर्शनात्। नचैवं चन्दनादिषु, ज्वरादिजनितशैत्यप्राबल्यादिपोषकत्वात् इति । तदेतद्विशदयति—ह्लादैकमयीमिति—एकमयी एकरूपा, जननव्यपदेशराहित्येन तत्त्वोपचारात् । प्रतिभाविजृम्भणमात्रशरीरतया व्युत्पत्त्यभ्यासोपस्कृतकविगतानादिवासनाऽन्तर्लीनरसादितत्त्वबहिःस्फुरणमात्ररूपत्वेन प्रतिबन्धकविगमार्थमेव हेतुत्वाभिमताभिधानाद्यपेक्षणमित्यपि कविवाग्गुम्फस्य समवाय्यसमवायिनिमित्तार्थहेतुत्रयजन्यप्रपञ्चवैषम्यम् , इत्याह—अनन्येति । पारतन्त्र्यं साक्षात्तदन्वयव्यतिरेकानुविधानम् । नवेति—परस्परविलक्षणरागप्रशमभागकर्बुरितानन्दमयानां शृङ्गारशान्तादीनां वैषम्यस्यात्यन्तोद्भटत्वेन दुरपह्नवतामासूत्रयन् निरतिशयसुखास्वादरूपत्वादेक एव रसः, नतु तस्य विशेषः सम्भवति, अतस्तन्मात्र(२)जीवातोः काव्यस्य ध्वन्यादिरूपेण यद्भेदगणनं तदपि खरविषाणैरायव्ययकल्पनमेवेति ये मेनिरे तन्मन्दम् ; इत्याह(३) नवरसेति । रसेति—रस्यमानतया शब्दार्थान्तरवैषम्यसूचनम् । रुचिरामिति—तेन जीवनेनात्यन्तसौभाग्य-

(१) वाक् "क" पाठः । (२) अत्र तन्मात्र—"क" "ख" पाठः ।

(३) "मन्दम्" इहेति । रसेति "क" पाठः । अत्र वाक्यस्य पूर्वभागे रचना शिथिलशिथिला प्रतिभाति ।

नियतिशक्त्या नियतरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा षड्रसा, न च हृद्यैव तैः, तादृशी ब्रह्मणो निर्मितिर्निर्माणम्। एतद्विलक्षणा तु कविवाङ्निर्मितिः । अत एव जयति, जयत्यर्थेन च नमस्कार आक्षिप्यत इति तां

---

भाजनेनोर्ज्जीवितत्वात् युक्तं जगद्वैलक्षण्यमिति भावः। निर्मितिर्घटना, तामादधती स्वाधेयभूतया कर्त्तव्यतया जनमनश्चमत्काराङ्कुरकरणाय प्रभवन्तीत्यर्थः । कवेरित्यपूर्वविज्ञानशिल्पितया नामैवास्य विलक्षणमिति भावः। ह्लादेत्यादि कारिकाभागात् पाश्चात्यमपि अनेनेत्यादिभागं तद्विवरणसौकर्याय प्रथमतो व्याचष्टे वृत्तिकृत्(१) परमाण्विति—तद्विवृतिस्तु(२) व्यतिरेकमुखेण भविष्यति नतु हृद्यैवेति, यद्वा सुखेत्यादिभ्यो व्यतिरेकः । नियतरूपेति तु कविसृष्टवस्तूनामपूर्वापूर्वभावेन तत्रोत्कर्षपरम् उपादानं समवायि कारणम् । कर्म-क्रिया। षडिति नवेत्यस्य व्यतिरेकावधिः। तैरिति षड्रसैः। अत एव जयतीति त्रैलोक्यविजयताफलनिखिलसहृदयवशीकारपात्रतामाप्नुयादित्यर्थः। नन्वाराध्यस्य गुणानुवादनमात्रेण कार्यार्थमाभिमुख्यं यदि कुतश्चिन्न स्यात् तदा निरर्थक एवैतावान्

---

(१) वृत्तत्वात् "क" पाठः ।

(२) तस्य ह्लादेत्यादिभागस्य विवृतिरिति यावत् ।

प्रत्यस्मि प्रणत इति लभ्यते ॥

इहाभिधेयं सप्रयोजनमित्याह—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥२॥

कालिदासादीनामिव यशः, श्रीहर्षादेर्धावकादीनामिव धनं, राजादिगतोचिताचारपरिज्ञानम्, आदित्यादेर्मयूरादीनामिवानर्थनिवारणं, सकलप्र-

---

प्रयास इत्याह—जयत्यर्थेनेत्यादि । कार्यमुद्दिश्याभिमतदैवतस्तुतिप्रवृत्तस्याव्यभिचरितमेव हि तन्नमस्करणं, सम्भृतयोश्च स्तुतिनमस्कृत्योर्भावशुद्धिमूलत्वेनाव्यभिचारिणी फलनिष्पत्तिरिति भावः ।

अस्य काव्यपरीक्षाशास्त्रस्य परीक्षणीयनिष्पाद्यफलैरेव फलवत्त्वं तदङ्गतयेति तात्पर्यं प्रेक्षावत्प्रवृत्त्यङ्गमवद्योत्य द्वितीयां कारिकामवतारयति—इहेत्यादि । अभिधेयं परीक्षाविषयतयाऽनूद्यं, यद्वाऽभिधेयपरीक्षणं सप्रयोजनं परीक्षणीयकाव्यस्य विनेयम् । कृते इत्यव्ययं तादर्थ्ये वर्तते, अर्थायेत्यर्थः । अथवा करणं कृत्, सम्पदादित्वात् क्विप् । एवं सर्वत्र । शिवेतरदशिवम् । सद्य इति—न तु धर्मादिवदुत्तरकालभाविदेहान्तरग्रहणाद्यपेक्षणमिति भावः । व्यवहारेत्यस्य विवरणम् आचारेति । अर्थ्यमानो धनादिरर्थः, तद्विपरीतो रोगादिरनर्थः । निर्वृतिपदार्थमाह—आनन्देति, तद्धेतुकथनं रसेति । रस्यते वशी-

योजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्या-

---

क्रियते इति रसो रत्यादिः, तस्यास्वादनं भोगपर्यायः साक्षात्कारः, तेन सम्भूतं संवलितमेकीभूतमिति यावत्, नतु रसस्य शृङ्गारादेरास्वादाज्जातमिति, आस्वाद्यास्वादाभिमतयोर्भेदाभावस्य तदेकात्मन आनन्दांशस्य कार्यत्वस्य च प्रतिपादयिष्यमाणत्वात्। परेत्यस्य निरुक्तिः सकलेत्यादि। तदेतत् कुत इत्याह— विगलितेत्यादि, विजातीयानवच्छिन्नप्रवाहवाहीत्यर्थः । प्रभ्विवत्यादि—यथा प्रभोराज्ञा न विचार्यते तथाऽग्निष्टोमादिष्वपि कथमस्मात् कर्मण इदं भविष्यतीन्यनालोच्यैव प्रवृत्तिरिति शब्दप्राधान्यं श्रुतिस्मृत्योः। अत एव तत्तच्छासनमात्रप्रधानतया तत्र शास्त्रपदप्रयोगः । इतिहासास्तु प्राचीनवृत्तवर्णनरूपा अमुना कर्मणेदं प्राप्तमिति दर्शयन्तो युक्तायुक्तफलदर्शनादर्थानर्थव्युत्पत्तिं जनयन्ति । पुराणं सर्गादिपञ्चावयवलक्षणयुक्तम् । आदिशब्दात् आख्यानादिपरिग्रहः । गुणभावे हेतुः रसाङ्गेति । रसस्य रस्यमानतासारस्याङ्गभूतोऽन्वयव्यतिरेककल्पितशक्तिकतयोपायभूतो व्यापारो विशिष्टविभावादिसंयोजनं तत्प्रवणतया तदङ्गतयोपादीयमानत्वंन। तदेतदुक्तं हृदयदर्पणे—

पारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुण-कविकर्म तत् कान्तेव सरसताऽऽपादनेनाभिमुखीकृत्य

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थतत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥

यदिति । यदेवम्भूतं तदेव काव्यं, नान्यदिति भावः । एतदेव द्योतयितुं(१) प्रथमोपात्तमपि काव्यपदमिदानीमनुवदति । तन्निरुक्तिः कविकर्मेति—येन कर्मणा कविशब्दभाजनत्वं तत् काव्यमित्यर्थः । तदेतत् कर्म स्फोरयति–लोकेति । लोकोत्तरचमत्कारप्रकर्षानुगुणा वर्णना विभावाद्युपनयनं, तत्र निपुणः–इत्यनेनान्यसृष्टपद्यादिहठादर्शनेन तत्कारणादिषु धृष्टदुष्टेषु कविव्यवहारनिरासः । तदुक्तं काव्यकौतुके--

प्रज्ञा नवनवोन्मेष(२)–शालिनी प्रतिभा मता ।
तदनुप्राणनाजीवद्वर्णनानिपुणः कविः ।
तस्य कर्म स्मृतं काव्यम्(३)–

तत् कान्तेव सरसताऽऽपादनेनेति—तथाभूतस्य रसाविष्कारो निष्प्रत्यूह एवेति भावः । अभिमुखीकृत्येति–

(१) द्योतयितुमेव "क" पाठः ।

(२) नवनवोल्लेख 'ख' पाठः ।

(३) इतः प्राक् तत्रैव 'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता' ॥ इति प्रज्ञाशब्दस्य विवृतिरेतदुपयोगिनी ।

रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथा-योगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र

---

सुकुमारमतित्वेनायासबहुलशास्त्रश्रवणविमुखानां राजपुत्रा-दीनामनेनोपायेन रसास्वादनसुखपिण्डदानद्वारा सुकरं व्युत्-पत्त्याधानमिति भावः । तदुक्तम्(१)—

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।

प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥

रामेति उपदेशमित्यन्तेनेदमाह— आस्वादोपायत्वेनाप्युपा-दीयमानं रामादिवृत्तान्तमाविर्भावयदेव वस्तु सामर्थ्याद्विहित-निषिद्धप्रवृत्तिनिवृत्तिमप्याधत्ते निदाघपरितापप्रशमायोपात्तः श्रीखण्डखण्डलेपः(२) शिशिरसौरभमिवेति । 'च' समुच्चये । यथायोगमिति–यशोऽर्थानर्थप्रशमान् द्वयोरपि, शेषांस्तु भावक-स्यैव । तथाहि–व्यवहारज्ञानहिताहितव्युत्पत्ती कवेस्तत्कृत-काव्यजन्ये न भवतः, तयोस्तन्निष्पत्तिहेतुत्वेनान्योन्याश्रयप्र-सङ्गात् । ननु व्यवहृतिज्ञानमपि हिताहितज्ञानमेवेति पृथग्गणनं निष्फलमिति चेत् , सत्यं, नृपगुर्वादिविषयो व्यवहारः स्वरूपत एवोपादेयोऽत्रैवं व्यवहर्त्तव्यमिति, शेषस्तु रामरावणादिवृत्त-

---

(१) भट्टनायककृते हृदयदर्पणे इति बहुत्राकरनिर्देशः ।

(२) श्रीखण्डलेपलेपः "क" पाठः । तत्र प्रथम"लेप"पदेन 'कृद-भिहितो भावो द्रव्यवत् प्रकाशते' इति न्यायेन द्रव्योद्देशः, चरम-'लेप'पदेन लेपनक्रियेति पाठसङ्गतिः ।

यतनीयम् ॥

एवमस्य प्रयोजनमुक्त्वा कारणमाह—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥

शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां

---

सदृशं वृत्तमुपादेयमनुपादेयश्चेत्येतावता वैषम्यम्। आनन्दानुभूतिरपि कवेः स्वकाव्यपर्यालोचनाऽनन्तरं जायमाना न करणोपाधिकृता किन्तु भावनोपाधिकृतेति भावकत्वांश एव निक्षिप्यते, काव्याङ्गोपाङ्गविद्याविज्ञानविहीनानां कवीनामपि सुप्रसिद्धसमग्रव्युत्पत्तिदशावशादास्वादप्रकर्षानुदयस्यानुमीयमानत्वात्। सहृदयस्येति—प्राचीनवासनासंवर्धिता(१)ङ्ग[ङ्गोपाङ्ग]विद्यानिपुणतोपस्कृता बुद्धिर्हृदयं तद्वत इत्यर्थः। करोतीति प्रतिकर्मपदं सम्बन्धः। सर्वथेति—शेषा विद्यास्तदङ्गतयैवोपादेय(?)मित्यर्थः। तत्र कर्तुं विचारयितुश्चेति शेषः। यतनीयमित्यग्रिमकारिकासङ्गतिसूचनम्(२)। तथाहि—पार्यन्तिकप्रयोजने क इवाहृत्य (३) व्यापारे सम्भवत्यनागतत्वात्; तस्मात्तन्निर्वाहकोपादानमेव तत्र यत्नः, अतस्तत्र यतनीयमिति।

---

(१) संवलितेति क्वचित् पाठः। संबन्धितो 'क' पाठः।

(२) एतच्चापाततः काव्यप्रकाशविवेककारं सान्धिविग्रहिकं श्रीधरमनुसृत्य। मतमेतत् खण्डितं सम्प्रदायप्रकाशिन्याम्।

(३) आहृत्य मिलित्वा।

विना काव्यं न प्रसरेत् प्रसृतं वा उपहसनीयं स्यात् । लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखड्गा-

---

कोऽर्थस्तत्कारणान्युपादेयानीति, तच्चाधिगम्य कानि तत्-कारणानीति श्रोतृजिज्ञासायां शक्यसाधनद्योतनपरां तृतीय-कारिकामाह—शक्तिरिति । कवित्वेति—कविसहृदयानन्दहेतुः काव्यं, तस्याङ्कुरस्येव कालान्तरे प्रादुर्भविष्यतो बीजरूपः । संस्क्रियते विशिष्टकार्यभाजनीक्रियते प्रमाणेनेति संस्कारः प्राचीन-वासना, देवताऽद्यनुग्रहजनितः कश्चनातिशयो वा, स एव विशिष्यते [ इति ] विशेषः स एव भक्तिः स्फूर्त्तिरिति यावत् । व्युत्पत्त्या तत्रान्यथाऽनुपपत्तिं प्रमाणयति यामित्यादिना । पदतदर्थविज्ञानवत्यपि पुंसि श्रद्धालौ यदभावकृतः काव्य-निष्पाद्यास्वादप्रकर्षयोरभावः सोऽयं नापलभ्यत इति भावः । न प्रसरेत् न जायेत, परोपपादितमपि वा (?) नास्वादप्रकर्षो यत्र भवेच्चेत्यर्थः । प्रसृतमिति–कष्टसृष्ट्या पद्यादिकमुत्पाद्य दुर्दू-रूढैस्तद्रूपतया सम्भाव्यमानं, पण्ड–(षण्ढ)सम्भोगन्यायेन कश्चनास्वादलेशमननुभूयाव्युत्पन्नैस्तन्मात्राविष्कारकतया स-म्भाव्यमानश्चेत्यर्थः । यद्यपि चोभयथाऽपि पुरुष एवोपहासपात्रं तथाप्येतदेव भ्रमविषयीभूतमन्यथाभावबीजमिति काव्यमुप-हसनीयमुक्तम् । स्यादिति प्राप्तकाले सम्भावनायां वा लिङ् । वृत्तस्येति—लोकपदस्य वृत्तपरत्वं वर्णनीयानन्तत्वख्यापना-

दिलक्षणग्रन्थानां, काव्यानां च महाकविसम्बन्धिनाम्, आदिग्रहणादितिहासादीनां च विमर्शनाद्व्युत्पत्तिः। काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिः—इति त्रयः समुदिता न तु व्यस्ताः तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुः, न तु हेतवः।

---

र्थम्। अभिधानानि नामानि तेषां कोषाः संग्रहाः। कला चित्रगीतादिविज्ञानम्। इतिहासादीनामित्यादिशब्देन निखिलकाव्यशब्दप्रपञ्चपरिग्रहः। तदुक्तम्—

न स शब्दो न तद्वाक्यं, (१)न सा विद्या न सा कला।
जायते यन्न काव्याङ्गमहो भारो गुरुः कवेः॥

करणं काव्यस्वरूपनिष्पत्तिः कवित्वशिक्षया। योजनं पूर्वपराविरुद्धतया रसाभिव्यक्तिक्षमत्वेन प्रबन्धाद्यवयवविन्यासः। सहृदयोपदेशाद्युपलक्षणञ्चैतत्। तेनास्वादप्रकर्षप्राप्त्यर्थमपि प्राथमिकैः परिनिष्ठितभावकोपदिष्टानि तस्यैव काव्यस्य मुहुर्मुहुर्भावनाऽऽवृत्त्युपादेयानि।

तदेवं समग्रग्रन्थोपयोगिकारिकात्रयमुक्त्वा प्रथमोल्लासप्रतिपाद्यकाव्यभेदलक्षणाभिधानं तत्सामान्यलक्षणानन्तरमेव सुप्रतिपदं भवतीति तद्दोषाविसादिना दर्शितं, तदवतारयति—

---

(१) 'तद्वाच्य'मिति श्रीधरोद्धृतः पाठः।

एवमस्य कारणमुक्त्वा स्वरूपमाह—

(१) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।

दोषगुणालङ्कारा वक्ष्यन्ते । क्वापीत्यनेनैतदाह यत्

---

एवमित्यादि । स्वमसाधारणं रूपमितरव्यावर्तको धर्मः । अदोषाविति दोषाणां यथाशक्ति हानसूत्रणम्(१) । शब्दार्थाविति शब्दस्य पूर्वनिपातेनाभ्यर्हिततरत्वं द्योतयन् विशेष्यत्वमाविष्करोति, शेषस्य तु परनिपातेनाप्राधान्याद्विशेषणत्वम् । एतञ्च शब्दधर्म एव काव्यत्वं,(२) तस्य चार्थे विशिष्टविभावादिव्याप्रियमाणस्यैवायमतिशय इति ध्वननार्थमर्थस्य तुल्यकक्षतया निर्देशः । ये तु द्वयोरपि काव्यत्वमिच्छन्ति त इत्थमनुयोज्याः—काव्यत्वमुभयधर्मतयाऽङ्गीक्रियमाणं संयोगादिवद्व्यासज्यवृत्ति वा ? गोत्वादिवत्प्रत्येकसमाप्यवृत्तित्वान्नाद्यः, सामान्यस्य तथा भावानङ्गीकारान्नेतरः, प्रत्येकं काव्यताप्रसङ्गात् । किञ्च कविकर्मविशेष एव काव्यमुच्यते । तच्च विशिष्टार्थप्रत्ययार्थसंयोज्यमानं पदकदम्बमेवेत्युद्देश्य एवार्थो, न तु

---

(१) दिग्दर्शनमेतत् । प्राचीनतमैः टीकाकृद्भी रुचकादिभिरस्योपष्टम्भः साधु सूचितः। तन्मते तददोषाविति कल्पमानोल्लासदशकस्य संक्षेपेणात्र सूत्रणं कृतं यथा सरस्वतीकण्ठाभरणे अदोषमित्याद्यग्रिमकारिकायाम् ।

(२) एतदनुवाद्येव विश्वनाथ-जगन्नाथ-प्रभृतीनामर्वाचीनानामालङ्कारिकधुर्याणां सिद्धान्तोद्घोषणम् ।

सर्वत्र सालङ्कारौ, क्वचित्तु स्फुटालङ्काकारविरहेऽपि न काव्यत्वहानिः । यथा—

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।

---

कविव्यापारगोचरः । सगुणाविति लक्षणं प्रद्योतनपरं, वक्ष्यमाणरीत्या गुणानामास्वादस्वरूपविशेषणत्वेनैव पर्यवसानात्, तत्प्रधानस्यैव च वाक्यस्य काव्यत्वाङ्गीकृतेः, इतरस्याभासतानियमात् । एतदुक्तं भवति—आस्वादजीवातुः पदसन्दर्भः काव्यम् । तत्र यत्रालङ्कारविशेषाः सम्भवन्ति तत्र परिपोषविशेषाभावे तु तेषां तत्कृतपुष्टिहीनत्वं, दोषतारतम्याच्चास्वादाभावतारतम्यं, न तु काव्यत्वहानिः, तेषां सर्वत्र व्यापकत्वात्, गुणाश्चास्वादशरीरान्तर्गता एव, न तु शब्दार्थरचनाधर्मा इति । ये त्वदोषाविति लक्षणांशमिच्छन्ति तेषां काव्यत्वं निर्विषयमत्यन्तप्रविरलविषयं वा स्याद्, उक्तादेव न्यायात् । यस्तु रसादिहीनेऽपि क्वचन काव्यव्यपदेशः स बन्धादिसाम्याद् गौण एव । तच्च सर्वमुक्तं वितत्यास्माभिर्ध्वनिसिद्धान्तसंग्रह इत्येव दिक्(१)।

---

(१) स्वसगोत्रप्राचीनपुरुषस्य मतमेतद् भणितिभङ्ग्या तात्पर्येण चानूदितं साहित्यदर्पणकृता स्वग्रन्थे इति तद्ग्रन्थालोकिनां स्फुटमेव । तत्कृतं काव्यलक्षणं प्राचां लक्षणविचारशैली चोपरिदर्शितमेव मार्गमनुहरतः सर्वथेति मतप्रवर्तनकल्पे पूर्वतनस्य टीकाकृत ऋणं नापलप्यमित्यलं पल्लवितेन । ध्वनिसिद्धान्तसंग्रह-ग्रन्थस्तु नाद्यापि क्वचन समासादितः ।

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ १ ॥

अत्र स्फुटो न कश्चिदलङ्कारः । रसस्य च प्राधान्या-न्नालङ्कारता ।

---

क्वचित्त्विति रसादौ विद्यमान इति शेषः । स्फुटेत्यादिना नञोऽल्पार्थता सूचिता । कौमारमभिनवं यौवनं सरससम्भोगा-मृतशीकरास्वादव्यसनव्यग्रिम्णा हृतवान् अलक्षितमिवाति-वाहितवान् इत्यकृत्रिमप्रेमपात्रताप्रकटनेन रागबन्धदार्ढ्य-ध्वननम् । वर इति स्वयमभिरुच्या वृतो न तु पित्रादिपार-तन्त्र्यात्यथाकथञ्चिदाश्रित इति । एवमन्यत्रापि पदानां जीवातु-रूहनीयस्तत्त्वबुद्धिभिः, अस्माभिस्तु ग्रन्थगौरवभिया क्वचन क्-चन इव वक्तव्य इति । मालती वासन्तिका जातिः । कदम्बो धूलिकदम्ब इत्येके, वसन्तघनसमययोर्द्वयोरप्यृतुराजयोर्ग्रहण-मिति तु सम्प्रदायविदः(१) । अत्र स्फुटो नेति—इह हि प्राणेश्वरसन्निधानादि धृतिकारणं, तत्र च सत्यपि तस्या अ-नुत्पत्तिस्तद्विरुद्धायाश्चोत्कण्ठाया उत्पत्तिरिति कारणसामग्र्यां कार्यानुत्पत्तिलक्षणा विशेषोक्तिः । तस्याश्चास्फुटत्वं प्रति-रूपकार्यस्य साक्षादुत्पत्त्यभावस्यानभिधानात् किन्तर्हि विरुद्धोत्-पत्तिमुखेन सूचनात् । यद्वा प्रियतमसङ्गमाभावादीनामुत्कण्ठा-

---

(१) सम्प्रदायविदां व्याख्यानमेतत्काश्मीरकरुचककृते सङ्केते महासान्धिविग्राहिकश्रीधरकृते विवेके च समग्रमालोचितम् ।

तद्भेदान् क्रमेणाह—

(२) इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः॥

इदमिति काव्यं, बुधैर्वैयाकरणैः प्रधानभूतस्फोट-

भावहेतूनामभावेऽपि तस्या उदय इति हेत्वभावेऽहेतुकोत्पत्ति-लक्षणा विभावना। साऽपि न स्पष्टा। निमित्ताविरहश्च वि-रुद्धयोगमुखेन, न साक्षादभिधीयमानत्वात्। एवञ्च साधक-बाधकत्वमानाभावात्सन्देहसङ्करः(१)। सोऽप्यनभिव्यक्तः, अन-भिव्यक्तकोटिद्वयालम्बनत्वात्। रसस्येति—अलङ्कारपदार्थ-पर्यालोचनयैव तदुपसर्जनीभाव[स्य] स्फुटाभावात्। रसपदञ्चात्र सम्भोगव्यभिचार्यौत्सुक्यमाह, रस्यत आस्वाद्यत इति व्युत्पत्त्या, न तु साक्षादेवात्र सम्भोगनामा रसः, स्वाधीनपतिकाया क्रीडास्थान(२) एवमुत्कण्ठायाश्चवर्ण्यमानत्वात्।

भिद्यतेऽनेनेति भेदो विशेषलक्षणं भेदनं भेदधर्मो(३) वि-भागश्च। तस्य च विशेषलक्षणप्रयोजनकधर्मिनिर्देशमात्ररूपस्य पृथग्वाक्य अभिधानं नातिफलवदिति प्रतिलक्षणवाक्य-

(१) एवं रुचककृतेऽलङ्कारसर्वस्वे विमर्शितम्। तदनुयायिनः श्री-धरादयोऽप्येवं मन्यन्ते। नेदं क्षोदक्षममिति प्राञ्चः केचित्, यन्मतं विवेक इत्थं परामृष्टं "ये तु सङ्करस्य पृथगलङ्कारतां न मन्यन्ते तन्मते तत्सम्भावना नास्ती"ति। अर्वाञ्चोऽपि प्रदीपकारादयो गजनि-मीलिकान्यायेनैतन्मतानुसारिणः।

(२) एवमुत्कलीयपुस्तके। स्थानमित्यशुद्धः पाठः "क" पुस्तके।

(३) भेदः "क" पाठः।

रूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्य-

---

मेवोपादानम्(१) । क्रमेणेत्यतः पूर्वं लक्षणमिति शेषः । वाच्यादतिशयस्य कृते उत्कर्षपात्रता, अतिशयो वाच्यापेक्षया चमत्कारविश्रान्तिकारी व्यङ्ग्यगतः प्रकर्ष इत्यपरे(२) । बुधैरिति कारिकापदं ध्वनिव्यवहारनिर्मूलत्वशङ्कानिरासाय, इत्याह—वैयाकरणैरिति । प्रधानेति—अर्थप्रत्ययरूपफलप्रत्यासत्त्यैत्यर्थः । स्फुटत्यर्थोऽस्मादिति स्फोटः, पूर्वपूर्ववर्णानुभवजनितसंस्कारसध्रीचीनान्त्यवर्णानुभवजनितप्रतिपत्तृगतातिशयवशादपरोक्ष इव क्रियमाणः सकलाभिधेयाभिधानमयतया स्वीक्रियमाणः, यमिमं शब्दब्रह्मेत्याहुः । स च व्यङ्ग्यः सन्नेवाविष्क्रियमाणोऽर्थमभ्यानयति, तदनुगुणा च शब्दे वर्णात्मके काचिदुक्तिः । सा च नाभिधाऽऽदिः, सङ्केताद्यपेक्षाविरहात् । वर्णाश्च ध्वननद्वारैव तथा विप्लवन्तीति ध्वननाख्या सा शक्तिः । अन्यैः श्रीमदानन्दवर्धनाचार्यप्रभृतिभिः । न्यग्भावितं प्रवणीकृतं वाच्यं येन व्यङ्ग्येनेति विग्रहः । व्यञ्जनं प्रतीतिः, तत्क्षमस्य तदनुगुणसामर्थ्यभाजः । शब्दार्थयुगलस्येति सर्वत्रोभयमूलस्य वक्ष्यमाणत्वात् । एतदुक्तं भवति, ध्वन्यत इति ध्वनी रसादिरर्थः, ध्वनतीति ध्वनिः शब्दो वाच्यादिरर्थो वा, ध्वन्यतेऽनेने-

---

(१) मीमांसासिद्धान्तसम्मतमेतदभिधानं विवेककारोपज्ञमिति प्रतिभाति ।

(२) अरुचिकरोऽयं कल्पस्तु विवेककारोद्भावितः ।

व्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य । यथा—

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥२॥

---

ति ध्वनिः शब्दादिगता वा शक्तिः, ध्वननं ध्वनी रसादिप्रतीतिः, ध्वन्यतेऽस्मिन्निति ध्वनिः काव्याख्यसमुदाय इति यद्यप्यनेकार्थो ध्वनिशब्दः,(१) यद्यपि चानेनैव न्यायेन गुणीभूतव्यङ्ग्यमपि ध्वनिपदवाच्यं भवितुमर्हति तथापि व्यवहारवशाद्वाच्योपस्क्रियमाणव्यङ्ग्य एव ध्वनिपदं नियम्यत इति । तटं समीपे समप्रायः प्रदेशः, तत्र चन्दनं निःशेषं च्युतं निम्नोन्नतेषु तु चुचूकाग्रस्तनमध्यादिषु सशेषमिति, अधरो निःशेषमृष्टरागो, न तूत्तरोष्ठः । तन्वीत्यपि व्यङ्ग्यपक्षे विधेयम् । अधमस्य प्रागपि लक्षितनिकृष्टपरिग्रहस्य । एतेषां पदार्थानामनुसन्धानानन्तरञ्चार्थस्याभातमात्रस्य प्ररोहाभावेन तदन्तिकं न गताऽसीत्यनेन वैपरीत्याद् गताऽसीति लक्ष्यत इति शेष इति प्राचीनानां श्रीमद्वाचस्पतिमिश्रप्रभृतीनां व्याख्यातॄणां मतम् (२) ।

---

(१) एतत्प्रसङ्गे 'यत्रार्थः शब्दो वे'त्यादिः प्रसिद्धा ध्वनिकारकारिका तदुपरि लोचनग्रन्थश्च जिज्ञासुभिरालोकनीयः ।

(२) विवेककारोऽप्येतन्मतमेवमेवोद्धरति स्वग्रन्थे । के ते सप्रश्रयमत्र स्मृता वाचस्पतिमिश्रा इत्यधुना निर्णेतुं न शक्यते । परं सर्वतन्त्रस्वतन्त्रेभ्यो दार्शनिकप्रवरेभ्यो वाचस्पतिमिश्रेभ्योऽर्वाचीनेभ्य-

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाधमपदेन व्यज्यते ।

---

रन्तुमिति तु फलं, वृत्तौ व्यज्यत इति तत्सम्बन्धः। (१) ये तु 'भम धम्मिअ' इत्यादाविवात्र वाच्यप्रतीत्यनन्तरमनुत्पनरीत्या व्यङ्ग्यप्रतीतिमिच्छन्ति ते न सम्यग्विदः। तत्र हि श्वमारणस्य सततयैवोपक्षिप्तत्वेन प्रतीत्यपर्यवसानाभावादनन्तरमेव भ्रमणविघ्नकारी श्वा यद्यपि निरस्तस्तथापि सिंहसञ्चारोऽयन्ततोऽधिकस्तद्विघ्नकारीति भ्रमणमयुक्तमिति प्रतीयते । न चैवमिह, वापीगमनस्य वास्तवतयोपक्षेपाभावात् किन्तर्हि वैदग्ध्यादग्राम्योक्त्या सूचयितुमुपादानात् । न च प्रतिपदजीवात्वनुसन्धातॄनपेक्ष्यैवं व्याख्येयमिति साधुपरिनिष्ठितापेक्षयैव काव्यविचारात्, अन्यथा 'उपकृतं बहु तत्र' त्यत्रापि तथा स्यात्, वक्त्रादिवैशिष्ट्यस्य कदाचिदव्युत्पन्नैरनर्थसन्धानसम्भवात् । तस्मात्प्रतीत्यपर्यवसानेनात्र लक्षणैव युक्ता स्यात् । तदुक्तम्—

क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य(२) बाधनम् ।

---

श्चिन्तामण्यादिस्मृतिनिबन्धरचयितृभ्यश्च ते भिन्ना इति तु नावद्यमनुमानम्।

( १ ) एतद्वाक्ये एतत्प्राक्तनवाक्ये च पुस्तकयोः पाठो न सम्यक्विति प्रतिभाति । गोविन्दठक्कुरेण ०प्रदीपे एतदेव मतमस्माद् ग्रन्थादेतदर्वाचीनाद्वा ग्रन्थान्तरादुदधारीति प्रतीयते। (काव्यप्रदीपस्य काव्यमालासंस्करणे २३ पत्रं द्रष्टव्यम् )।

( २ ) क्वचिद्वा तस्य "क" पाठः। रुचककृते ०सङ्केते उत्कलीयपुस्तके, साहित्यदर्पणे चोपरिदर्शित एव पाठः स्वीकृतः ।

(३) अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।

अतादृशि वाच्यादनतिशायिनि। यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥१॥

---

पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु॥

एतेन वापीगमनेन तन्निषेधः कामुकसमीपगमननिषेधेन च तद्विधिर्व्यज्यत इति यत्कैश्चिदुक्तं(१) तन्न युक्तम्, उक्तयुक्त्या लक्षणीयत्वात्। अत्र च दौत्यरूपात्यन्तनिकृष्टकर्मजीविकायां त्वयि कृतापराधायामपि मे नासूया, न च तस्मिन्नैसर्गिकाधमकर्मचुञ्चौ, किन्त्वकृतज्ञायां त्वयि यद्धान्धबुद्ध्या विश्वसिमि यच्च तस्मिन्नेवंविधे हारिद्रारागिणि दुर्विदग्धे दृढमनुरक्ताऽस्मि मन्दभागिनी तदेवंविधवञ्चनासहस्रजनितप्रौढपरिपाकपुटपाकपात्रत्वं मम युक्तमेवेति विप्रलम्भभेदेर्ष्यामानव्यभिचारिनिर्वेदध्वनिः, तदङ्गन्तु लक्षणामूलवस्तुध्वनिरित्यवहितैर्विवेचनीयम्। एवमुदाहरणान्तरे वृत्तिकृदुक्तादन्यदपि विस्तरभीत्यास्मदनुक्तमपि बोद्धव्यं महाबुद्धिभिः।

वाच्यादित्यादि—चित्रे व्यङ्ग्यमत्यन्तास्फुटम्, अत्र

---

(१) 'ध्वनिकृता हि विधौ वाच्ये निषेधः पृथक् निषेधे च वाच्ये विधिः पृथगुदाहृतः। विधिनिषेधद्वारेण चोदाहरणं वाच्यव्यङ्ग्ययोरित्यत्र वैलक्षण्यख्यापनार्थ'मिति ०विवेकोद्भावित आशयोऽत्राक्षिप्तः स्यात्।

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतं, तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ।

---

पुनरतथाभूतमपि व्यङ्ग्यं वाच्यादनतिशयितमिति(१) ध्वनि-चित्राभ्यामस्य भेदः। वाच्यादनतिशयश्च व्यङ्ग्यस्य समप्राधान्ये-ऽपि स्थले विद्यत इति वक्ष्यमाणप्रकाराष्टकव्याप्तिसूचनम् । यद्यपि च 'अखण्डबुद्धिवेद्यः काव्यार्थ'(२) इति नयेनास्वाददशाया-मवयवानां गुणप्रधानभावो न विकल्प्यते, तथाप्युत्तरकालीन-विवेचकैरावापोद्वापविवेचने क्वचन कस्यचित्प्राधान्यं कस्य-चिदप्राधान्यं भासत इति भेदव्यवहारः। आस्वादप्रकर्षापकर्षकृत-श्चोत्तमादिव्यवहारः । यद्यपि चास्वादवत् काव्यम्, आस्वादे च व्यङ्ग्यान्तरस्य(३) गुणीभूतत्वाव्यभिचार एव तथापि वाच्यतः प्राधान्यमात्रेण वस्त्वलङ्कृत्योर्ध्वनिव्यवहारः। अतथाभूतयोस्तु गुणीभूतव्यङ्ग्यव्यवहार इति । यत्र रसादिकमन्यत्र प्रक्रियमाणे गुणीभवति(४) यथा मम—

उअ तिमिरे देरविमलोदके कइरवसरे परिहमन्तम्मि ।

---

(१) 'अङ्गभावादिनादनतिशयित'मिति विकृतः 'क' पुस्तके पाठः।

(२) 'वाक्यार्थ' इति पाठे तु पञ्चमोल्लासकृतनिर्देशं वेदान्तिमत-मेवोद्दिष्टं स्यात् ।

(३) आस्वादशरीरभूतरसादिव्यतिरिक्तस्येति यावत् ।

(४) 'ननु यत्रे'त्यादिः......'इत्यादौ तद्गुणीभूतत्वव्यवहार इति' इत्यन्तोऽसंलग्नः पाठः 'क' पुस्तके ।

असिअं णु अपणढकिअं जामिणि वसणं वसासि दिव्वं ॥ (१)

तत्र गुणीभूतत्वव्यवहार इति । ननु यत्र रसादिकमन्यत्र प्रक्रियमाणे गुणीभवति तत्र व्यङ्ग्ये(२) कथं काव्यव्यपदेशो, रसादेरमुख्यत्वात्, प्राधान्य एव काव्याङ्गीकारात्? अत्र ब्रूमः। केनोक्तमत्र रसादिर्गुणीभूत इति? समूहालम्बनरूपस्यास्वादस्य सहृदयहृदयविश्रान्तिधाम्नः शब्दार्थादिनिखिलकाव्यावयवचारुत्वसामग्रीसाम्राज्यसम्पूर्णस्यात्रापि स्वसंवेदनसाक्षिकत्वात्, तस्यैव च रसादिपदवाच्यत्वात्। ननु यद्येवं, तर्हि दीयतां ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्याभिख्यायै निवापाञ्जलिः; आस्वादस्योक्तरीत्या क्वचिदपि गुणीभावस्याभावात्, अतस्तत्त्वाभासतानियमात्। सत्यं, [परं] मुख्यरसाद्युपायभूते रत्यादौ प्रक्रियमाणाधिष्ठाने प्राधान्यमुपचर्याप्रक्रियमाणगतेऽप्राधान्यमाश्रित्यास्वादोत्तरकाले विवेचकैर्ध्वन्यादिविभागः क्रियत इत्युपपद्यते भेदव्यवहारः। यदि च रसाद्यन्तरे तस्यैव गुणीभावस्तदो-

(१) त्रुटितप्रायेयं गाथोभयोरेव पुस्तकयोः। 'तअ भिमिवे दकविम कइववसरे परिहसन्तम्मि। असिआ ण अपणढकिअं यामिणि वसुणं वससि विद्दं ॥' 'क' पाठः। 'उअ तिमिरे दरविमलदककइरवरसे परिहसन्तम्मि। असिअं ण अप्पण ढकिअं जामिणि वसणं वससि विग्घं ॥ 'ख' पाठः। यथाकथञ्चित् यथामतीयं समाहिता। 'पश्य तिमिरे दरविमलोदके कैरवसरसि परिहसति। असितं नु आत्मनाऽऽवृतं यामिनि! वसनं वस्से दिव्यम् ॥' इत्युपरिपाठानुसारिणी छाया।

(२) 'रसादिकमन्यत्र प्रक्रियमाणो अगुणीव्यङ्ग्ये' इति व्यत्यस्तः पाठः 'क' पुस्तके।



भयव्यपदेशप्राप्तावपि यस्य चमत्काराधिक्यमधिकं विविच्य व्यवस्थापयितुं शक्यते तन्मुखेनैव व्यपदेशो यथा मम—

क्षिप्तप्रशाम्यदरुणोग्रविलोलभावैः
सद्योविलीनविकटभ्रुकुटीविभङ्गैः ।
यः सङ्गरेषु करवालकरालपाणि-
र्दीनैर्विलोचनपुटैर्द्विषतां व्यलोकि ॥

अत्र यद्यपि क्रोधप्रशान्तित्रासोदयाभ्यां संस्कृतस्य वीरस्य नृपविषयरतिभावाङ्गतयैव व्यवस्थानं तथापि तस्यैव चमत्कारा-धानक्षमत्वं विवेचनायामवभासत इति तन्मुखेनैव गुणीभूतव्यङ्ग्य-भेदरसवदलङ्कारव्यवहारो न्याय्यो, न तु भावध्वनिव्यवहारः ।

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥(१)

अत्र सीतासहचरस्य श्रीरामचन्द्रस्य प्रकरणानुसन्धाना-द्विपरीतविहारलक्षणः सम्भोग एवं चमत्कुरुते, विप्रलम्भस्तदङ्ग-भूतो निगूढ एव चरतीति सम्भोगव्यपदेश एव युक्तः । एव-मन्यत्राप्युन्नाव्यं भावुकचक्रवर्तिभिः । ननु वस्त्वलङ्कृत्यो रसा-दिसान्निध्येनोद्भटीभूतयोर्वाच्यापेक्षया प्रधानीभूतयोरेवम्, इतर-योस्तु गुणीभाव इति, यदुक्तं भवता तद्बहुविप्लवकारि, नीरसस्य तथाभूतस्य वाक्प्रपञ्चस्य सर्वस्यैवाकाव्यत्वप्रसङ्गात् । कष्टं भो प्रविलुप्तं निखिलमेव ते संव्यवहारभाण्डम् । आयुष्मन्

(१) रघुवंशे (१३।२६)८। अत्र टीकाकृन्मन्तव्यमनादीनवं रहस्य-वस्तुसूचनं विदग्धैर्विमर्शनीयम् ।

कन्यादिसाम्यादाभासग्रस्तबुद्धिभिस्त्रैलोक्यसम्मोहनप्रयुज्यमानकाव्यव्यवहारं माऽत्र वृथा कृथाः (१)। नन्वेवं चित्रस्याकाव्यत्वमेव स्यात्, आस्वादसम्भेदे(२) यथायथं प्राचोरेवान्तःपातात्, अन्यथाऽऽभासतानियमात्। नच वाच्यं क्षुद्रमास्वाद्यं तत्राप्यस्तीति, क्षुद्रत्वेऽनास्वाद्यत्वात्, आस्वाद्यत्वेऽक्षुद्रत्वात्, तस्मात्तत्रैव विधानमयुक्तमेव स्यादिति चेत्—सत्यमेवं, किन्तु गड्डलिकाप्रवाहपतितानां जरतां गौरवप्रबन्धनियन्त्रितोऽयं ग्रन्थकृत्त्रैविध्यमुक्तवान्(३)। यद्वा रसवत्प्रबन्धावयवध्वनिगुणीभूतव्यङ्ग्यचित्रतया त्रिधा इति तत्परं त्रैविध्यगणनं, सरसगाथाऽऽदिगतैकनीरसपद्यादिव तेषां काव्यावयवताहान्यभावात्, प्रबन्धस्यैव तत्र काव्यतास्वीकारात् (४)। परमार्थतस्तु सरसता-

(१) काव्यव्यवहारमात्रं कृथाः 'क' पाठः, काव्यव्यवहारं माऽत्र वृथा 'ख' पाठः।

(२) एवं 'क' पाठः। 'आस्वादसत्त्वे' 'ख' पाठः।

(३) सरसोऽयं टीकाकृत्स्वरसो मान्यानां ग्रन्थकृतां विचारसरणिं प्रति कर्कशाक्षेपपरोऽपि निपुणैः सादरमाकलनीयः। ०प्रकाशकृत्तरत्नैकतो वामनोद्भटादिप्राचीनसरणिकृतामपरत आनन्दवर्धनाभिनवगुप्तप्रमुखनवीनमार्गप्रवर्तकानां मतजालयोर्मध्ये सन्देहदोलायितचित्तवृत्तिः स्वकीयग्रन्थेऽसामञ्जस्याद्यवतारयतीति शास्त्रदर्शिनां सुस्थितः सिद्धान्तः।

(४) एतन्मतं सप्रश्रयं स्मृतं साहित्यदर्पणे चतुर्थपरिच्छेदस्यान्तिमे भागे 'तदुक्तमस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डीदासपादै'रित्युपक्रम्य। तत्रोद्धृतः सन्दर्भस्तु ध्वनिसिद्धान्तसंग्राहीयः स्यात्।

(४) शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥

चित्रमिति गुणालङ्कारयुक्तम् । अव्यङ्ग्यमिति

---

ऽस्मैव काव्यं, तच्च द्विविधमेव—तदुक्तं 'काव्यस्यात्मन्यङ्गिनि रसादिरूपे न कस्याचिद्विमति'(१)रिति ।

'गुणप्रधानभावाभ्यां काव्यस्यैवं व्यवस्थितेः ।
द्विधा काव्यं ततोऽन्यद् यत्तच्चित्रमभिधीयते(२) ॥' इति ।

ग्रामेति—जन्मप्रभृतिप्रातिवेश्या—(३)दनुरागपात्रत्वप्रकटनम्। पश्यन्त्या इति वृत्ताविरतो वर्त्तमानः । मुहुर्नितरामिति—यदा यदा तत्तदनुरागशाठ्यं तदा तदाऽनुतापोत्कर्षाविष्काराऽन्मुखमालिन्यप्रकर्ष इति तद्विदां स्वरसः(४) । वाच्यस्य मुखश्रीमालिन्यस्यैव विप्रलम्भाभासोत्कर्षवत्त्वं, व्यङ्ग्यस्तु सङ्केतसमयभङ्गस्त्वङ्गतया तद्भुजिष्य इव तन्मुखापेक्षी ।

अव्यङ्ग्यमिति ईषदर्थे नञ्, व्यङ्ग्यात्यन्ताभाववति काव्यपदप्रयोगाभावात् । एतच्च सामान्यलक्षणमिति लक्षणे चित्र

---

(१) महिमभट्टकृते व्यक्तिविवेके ( २२२ पृ० ) । 'अङ्गिनी'त्यत्र 'संगिनि' 'संज्ञिनि' इति च पाठान्तरे मुद्रितपुस्तके ।

(२) ध्वनिकारिका (३।४२) ध्वन्यालोके काव्यमालासंस्करणे ( २२० पृ० ) । 'काव्ये उभे' इति तु मुद्रितपुस्तके पाठः ।

(३) जन्मप्रभृतिभिः प्रादेश्यात् 'क' पाठः ।

(४) अत्र ०विवेके 'मुहुर्मितरामित्यव्ययद्वयसरस्स' इति व्याख्या दर्शिता । सैवात्र पाठपरिपाटी स्यात् ।

स्फुटप्रतीयमानार्थरहितम्। अवरमधमम्। यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥४॥

पदमध्याहार्यं, (१)तद्विभागः शब्दचित्रं वाच्यचित्रमिति। अवर-मिति—प्रबन्धैकदेशपक्ष इतरैकदेशापेक्षया निकृष्टत्वात्, अन्य-थाऽऽभासत्वादिति भावः। गुणेति—शृङ्गारादिगतचित्तद्रवीभाव-मयमाधुर्यादिव्यञ्जकसजातीयस्य कस्यचिद्बन्धादिवैशिष्टस्याभि-धानम्। अलङ्कारेति—रसादिपोषकोपमादिसाजात्यात्तत्पदप्रयोग-भाजो यमकादेश्च प्रसिद्धिमात्रव्यामूढैरलङ्कारतया व्यवह्रिय-माणस्योक्तिः। स्फुटेत्यादि—रसाद्यभावादित्यर्थः। छातमल्पम्। अह्नाय झटिति वो मन्दतां भिन्द्यादि(२)त्यन्वयः। दरिद्राः शुष्क-त्वेन ग्लानाः। अत्र प्रवहद्रूपेणानुप्रासेन बन्धवैकट्येन च चेतसि काऽपि प्रकृष्टिकाऽऽधीयते। न चात्र गङ्गाविषयभाव-ध्वननमत्याशा ज्यायसी। यत्र सर्वात्मना तन्मात्ररूपा रतिः प्रती-यते तस्य तद्वर्णन एव हि रतिध्वनिव्यपदेशो, न तु दैवतोपनि-

(१) चित्रमिति लक्ष्यपदमध्याहार्यं 'ख' पाठो विवेकानुसारी। चित्रमिति लक्षणपदमध्याहार्यं 'क' पाठः।

(२) 'भिन्द्यादि'ति लिङ्सामान्यपाठः प्राच्यटीकाकृद्ग्रन्थेषु बहु-ष्वुपलभ्यते। 'भिद्या'दिति आशिषि लिङः प्रयोगस्तु बहुतरसम्मतः।

विनिर्गतं मानदमात्ममन्दिरा-
द्भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियाऽमरावती ॥ ९ ॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूप-
विशेषवर्णनो नाम प्रथम उल्लासः ॥

---

बन्धमात्रेणेत्यादि विस्तरान्निर्णीतं ध्वनिसिद्धान्तसंग्रहे । यमिति-प्रकृतं हयग्रीवम् । यद्यपि चात्र प्रबन्धपर्यालोचनया वीरः प्रतीयते तथाप्येतन्मात्रेण तत्परिपोषाभावात् तदनपेक्ष्य वाच्योत्प्रेक्षामाश्रित्य चार्थचित्रतोक्तिः ।

इति कापिञ्जलकुलतिलक-षड्दर्शनीयचक्रवर्त्ति-
महाकविचक्रचूडामणि-सहृदयगोष्ठीगरिष्ठ-
महामहोपाध्याय-महापात्रश्रीचण्डीदास-
कृत-काव्यप्रकाशदीपिकायां
प्रथमोल्लासः(१) ।

---

(१) इति प्रथम उल्लासः 'क' पाठः ।......श्रीचण्डीदासमहामहोपाध्यायकृतकाव्यप्रकाशदीपिकायां......टीकाग्रन्थान्ते 'ग' पुस्तके ।

# द्वितीय उल्लासः ।

क्रमेण शब्दार्थयोः स्वरूपमाह--

(५) स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ॥

अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।

---

उल्लासस्य प्रवृत्तिविषयं स्फुटीकुर्वन्नुद्भावयति—क्रमेणेत्यादि । शब्दस्य विशेष्यतया प्रथमं ततोऽर्थस्येत्यर्थः । रूप्यते निरूप्यतेऽनेनेति रूपं वैधर्म्यं, स्वस्मात् सजातीयादेव रूपं स्वरूपं, विशेषलक्षणमिति यावत्, जात्यपेक्षमेकत्वम् । उद्देश्यविभागस्तु तत्प्रवृत्तिसौकर्याय—एकस्यैव शब्दस्य तत्तद्बहूपाधिवशाद्वाचकादिसंज्ञाभेदो देवदत्तस्येव पाचकादिपदानि । अत्रेति—तन्त्रान्तरे (१)व्यञ्जकताऽनङ्गीकारात् । विभागस्य विशेष-(२)लक्षणप्रयोजनकतां स्फोरयति वृत्तिकृत्-एषामित्यादिना । यद्यपि शब्दविभागानन्तरं तद्विशेषलक्षणं वक्तुं युक्तं तथापि विभागप्रकरणमेकमेव भवत्वित्यभिप्रायेण, वाच्याद्यर्थविशेषप्रतिपादना(३)नुगुणवाचकत्वाद्युपाधिवशाद्वाचकादिभेदो न तु गवाश्वा-

---

(१) मीमांसादर्शने न्यायनये च यत्र हि प्रायशः शब्दार्थशक्तिविमर्शः कृतः ।

(२) विशेषणलक्षण 'क' पाठः ।

(३) प्रतिष्ठापनानुगुण 'क' पाठः ।

(६) वाच्यादयस्तदर्थाः स्युः-

वाच्य-लक्ष्य-व्यङ्ग्याः ।

(७) तात्पर्यार्थोऽपि केषुचित् ॥ ६ ॥

आकाङ्क्षा-योग्यता-सन्निधिवशाद्वक्ष्यमाणस्वरूपाणां

---

दिवत्तत्तद्रूस्त्वनन्तरमिति द्योतयितुं वा मध्येऽर्थविभागमाह--वाच्येति । वाच्यलक्ष्यव्यङ्ग्या इति शब्दवदौपाधिकानि नामानि, गौणयोस्तु शब्दार्थयोः पृथक् गणनं न कृतं, गौण्या लक्षणाऽन्तर्भावाङ्गीकारात् । केषुचिदिति--असार्वत्रिकतया समकक्षभावायोग्यायास्तात्पर्यनाम्न्या लक्षणाया(१) उपाधिविषयतामाश्रित्य शब्दार्थप्रकारपार्थक्यानादर इति भावः । आकाङ्क्षा प्रतीतिपर्यवसानविरहः श्रोतृजिज्ञासारूपः । सन्निधिबुद्धिविच्छेदाभावः । योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः । वक्ष्यमाणेति--जात्यादिरूपाणामित्यर्थः । समन्वये विशेषवपुःसमन्विताकारतयाऽभिधेयादिविलक्षणस्वरूपः, अत एव तौतातितादिभिर्लक्ष्यो वाक्यार्थ इति (२)यदुच्यते तद्-

---

(१) तात्पर्यं हि द्वितीयलक्षणेति कैश्चिन्मीमांसकैरभिधीयते । अतोऽसार्वत्रिकत्वात्समशीर्षिकया न तद्गणनमित्याशयः ।

(२) अनन्वितानामभिधानं, पश्चात्तेषां समन्वये कर्तृकर्मक्रियाव्यापारे संसर्गाधिकवाक्यार्थबोधिन्या वाक्यार्थलक्षणया द्वितीयलक्षणेत्यपरपर्यायया ऽर्थप्रतीतिरिति वादिनस्तौतातिताद्यो मीमांसकधुरीणाः । केषुचिदित्यालङ्कारिकाणां तात्पर्य्यपदार्थस्वीकारेऽरुचिः प्रतिपादिता ।

पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम्। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः।

---

ष्यस्य नामान्तराभिप्रायेण, न तु प्राचीनलक्षणाविषयतया अपदार्थोऽपि वाक्यार्थ इति एकैकपदानामगम्योऽप्याकाङ्क्षादीतिकर्तव्यतासचिवैः पदैः सम्भूयार्थ्यमान इत्यर्थः। अभिहितानामभिधया लक्षणया वा बोधितानां पश्चाद्वृत्त्यन्तरेण समभिव्याहारं ये मन्यन्ते नैयायिकादयस्तेषां तात्पर्यार्थः पृथगभिमत इत्यभिहितेत्यादेरर्थः। वाच्य एवेति—चैत्र गामानयेत्युत्तमवृद्धोपदेशात्सास्नादिमति पिण्डे मध्यमवृद्धेन सञ्चार्यमाणे तद्दृष्ट्या तस्य वाक्यस्य तदर्थबोधकतामनुमायानन्तरं गां नय अश्वमानयेत्यादि प्रयोगेषु आवापोद्धारसदृशक्रियापदार्थान्वितेषु कारकपदार्थान्विते च क्रियापदार्थे तस्य तस्य पदस्य शक्तिमवधारयत्यन्वयव्यतिरेकाभ्यां, ततश्च प्रयोगकाले तस्य प्रथमत एव तथाविधैव बुद्धिर्जायत इत्यभिधाऽतिरिक्ततात्पर्यवृत्त्या किं फलमित्यन्विताभिधानवादिनः श्रीमदाचार्यप्रभाकरगुरोर्मतमित्यर्थः। ननु यद्यसार्वत्रिकतया तात्पर्यार्थागणनं, समकक्षतया तर्हि व्यङ्ग्यार्थागणनमपि न्याय्यम्। नैवं, व्यङ्ग्याविष्कारार्थमेवाभिधेयादीनामनुवाच्यत्वात्। तदगणने तुरगारूढस्य तुरगविस्मरणवदत्यन्तप्रमादित्वापातात्(१)। नचैवं

---

(१) सर्वमेतत्सप्रपञ्चमालोचितं पञ्चमोल्लासस्योत्तरार्द्धे तद्

(८) सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ॥

तत्र वाच्यस्य यथा--

माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाई ॥ ६ ॥

अत्र स्वैरविहारार्थिनीति व्यज्यते ।

---

तात्पर्ये, तस्यार्थबाह्यत्वेनाप्राधान्यात् । यथा वाच्यादयोऽर्थभेदास्तथा व्यञ्जकरूपोऽप्यर्थान्तरव्यञ्जनोपाधिकृतः सम्भवति भेद इत्याह—सर्वेषामिति, वाच्यादीनामित्यर्थः । प्रायश इत्यव्याप्तिसूचनम् । वाच्यस्येति गुरुनये, अन्यत्र तात्पर्यार्थस्य, व्यङ्ग्यो वृत्तिकृदुक्तोऽर्थः, पदजीवातुस्तु भवत्र वाच्यव्यङ्ग्यः(१)। अद्य खल्ववसरो नास्ति, न त्वन्यदा, तद्व्यग्राया मम कदाऽस्त्यवसर इति काका रहस्यम् । एवमेव व्यासङ्गं विना । अत्र तावत् समभिव्याहृतपदार्थरूपवाक्यार्थान्वयानन्तरं स्वैरं तावद्विहरामीति योऽर्थः प्रकाशते स तावन्नाभिधेयो, ऽसङ्केतितत्वात् , उपात्तैकैकपदालभ्यत्वाच्च । नापि तात्पर्यविषयः, तस्य संसर्गमात्रोपक्षयात् । ततश्चान्यथाऽनुपपत्त्या वृत्त्यन्तरमङ्गीकार्यम् । तच्च यद्यपि वक्ष्यमाणरीत्या शब्दादिषु सर्वत्रैव दत्तपदं तथाप्यत्रार्थस्य शक्तिः प्रधानं, शेषशक्तिस्तु तदुपकारिकैवेति वाच्यद्वारा

---

परि टीकायाञ्च । प्रमादितपातादित्यसङ्गतः पाठः 'क' पुस्तके ।

(१) पदानामर्थाश्रितशरीर इत्याशयष्टीकाकृतां भवेत् । वाच्यव्यङ्ग्य इति लक्ष्यव्यङ्ग्यादतिरिक्तः । एवं स्थिते उभयत्र तु वाच्यव्यङ्ग्य इति पाठः साधीयान् ।

लक्ष्यस्य यथा--

साहेन्ती सहि सुहअं खणे खणे दूणिआ सि मज्झ कए।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए॥७॥

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यं, तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्।

व्यङ्ग्यस्य यथा—

उअ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव्व॥ ८॥

---

व्यपदेशः। साहेन्ती साधयन्ती शासती वा(१)। दूणिआ खिन्ना। सब्भावो विश्वासः। स्नेहोऽनुरागः। अत्र वक्त्र्यादिवैशिष्ट्य-सचिवेन सद्भावेत्यादिना वैपरीत्यं लक्ष्यते, तेन तस्यैवाति-शयो बोध्यगततया व्यज्यते। तदेतदाह--शत्रुत्वमिति। लक्ष्य-मिति--लक्षणामूलव्यङ्ग्यमित्यर्थः(२)। ये तु वैजात्यादेत-दपलपन्ति तान्प्रति व्यङ्ग्यान्तरमाह---तेनेति। लक्ष्येण दूती-गतापराधेन तदुभयनिष्पादकतया तस्य कर्मण इत्यर्थः। उअ पश्य। निश्चल निरुद्यमेति सम्बुद्धिः। रेहइ शोभते। शङ्ख-

---

(१) एवमपि विवेके। एकत्र मदीयामवस्थां तस्मै कथयन्ती, अन्यत्र मत्प्रियपक्षपातिनं कुर्वतीत्यर्थः। क्वचित्तु शंसन्तीति च्छाया। तथात्वे संसन्तीति गाथायाः पाठः।

(२) 'उपकृतं बहु तत्र किमुच्यत' इत्यादिवत्। एवं सम्प्रदाय-विदः सर्वे। प्रदीपे च विस्तरत एतत्सूचितमिति तत्रैवालोकनीयम्। जयरामन्यायपञ्चाननादिभिस्तु मतस्यास्य खण्डने चेष्टितम्।

अत्र निष्पन्दत्वेन आश्वस्तत्वं, तेन च जनरहितत्वम्, अतः सङ्केतस्थानमेतदिति कयाचित्कञ्चित्प्रत्युच्यते । अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते ।

वाचकादीनां क्रमेण स्वरूपमाह—

(९) साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥९॥

इहागृहीतसङ्केतस्य शब्दार्थप्रतीतेरभावात्सङ्केत-

---

शुक्तिस्तिलकमात्रोपयोगिस्वल्पचन्दनादिनिधानशङ्खपात्री, न तु मुक्ताशुक्तिः, तस्या बलाकावर्णराहित्यात् । अत्र तृतीयमेव व्यङ्ग्यञ्चमत्कारप्रत्यासन्नं, ततश्च तात्पर्यं, तेनैव बुद्धेर्विश्राम इति तन्मुखप्रेक्षित्वं पूर्वव्यङ्ग्ययोः । सम्भोगाद्विप्रलम्भोऽधिकश्चमत्कुरुत इत्यभिप्रेत्याह--अथवेत्यादि । तृतीयस्थाने विकल्पः, प्राचीनद्वयन्तु(१) तदवस्थमेव ।

एवं शब्दार्थौ विभज्य विशेषणफलानि विशेषलक्षणानि(२) वाच्यानीत्युपादत्ते वाचकादीनामिति । क्रमेणेत्यतः पूर्वं

---

(१) 'अत्र पूर्वार्थद्वयप्रतीतावपि न कश्चन चमत्कार इति तृतीयार्थमात्रादेव काव्यत्वप्रतिलम्भः । अत एव पूर्वोक्तोदाहरणेषु व्यङ्ग्यपरम्परासम्भवेऽपि नायं विशेष इत्याशयाविष्कारः' इति विवेके । प्राचीनद्वयन्तु इत्युपरितनसन्दर्भस्याक्षेपपूरकः ।

(२) विशनफलानीत्यस्फुटः पाठः 'क' पुस्तके, विशेषफलानि 'ख' पाठः ।

सहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ।

(१०) सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाऽप्यानन्त्याद्व्यभिचाराच्च तत्र सङ्केतः कर्तुं

---

बुद्धौ(१) इति शेषः । रूपं लक्षणं सङ्केतितं सम्बन्धितयोपदिष्टम् । अभिधा तु समयस्मृत्यवान्तरव्यापारः सन् स्मारयति । स इति तदुपाधिविशिष्ट इत्यर्थः । इहेत्यादिना व्यतिरेकमुखेण सङ्केतस्यार्थप्रत्ययोपायतामाह । साक्षादित्यस्य विवृतिरव्यवधानेनेति--न तु 'यन्नामा यत्र चैत्रादि-(२)स्तन्नामविषयेऽपि स' इतिवत्सान्तरतमयेत्यर्थः । शब्दविशेषलक्षणेनार्थविशेषा अपि लक्षिता भवन्तीति बुद्ध्या वाच्यमपि वादि-(३)विप्रतिपत्तिप्रसङ्गादाह--सङ्केतित इत्यादि । अर्थः प्रयोजनं तस्य क्रिया निर्वाहः वज्राग्निवत् समुदितं वा कार्याणाम् । (४)आनन्त्यादिति सकलव्यक्तिषु समयस्याशक्यत्वम् । व्यभिचारादिति--कति-

---

(१) बोधव्यापारे प्रकृते इत्यर्थः ।

(२) यन्नाम 'क' पाठः । 'चैत्यादिः' 'चैत्रादिः' इत्यन्यत्र पाठवैचित्र्यम् । एवमपि प्रदीपे ।

(३) गवादीत्यस्फुटः पाठः 'क' पुस्तके ।

(४) निर्वाह इत्यनन्तरं कोऽप्यंशः प्रमादपतितः स्यात् । उत्कलीयपुस्तकमितः प्रागेव शीर्णमिति पाठोद्धारे न किमपि साहायकमासादितम् ।

न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव सङ्केतः ।

उपाधिश्च द्विविधः, वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च । वस्तुधर्मोऽपि द्विविधः, सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः, पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । तत्राद्यो जातिः । उक्तं हि वाक्यपदीये—

---

पयव्यक्तावनुपयोगित्वम् । गोत्वादिसामान्यानामुपग्रहमन्तरेण प्रवृत्तौ गवादिपदस्य शुक्लादिपदसमभिव्याहारप्रयुक्तस्य तदर्थविविक्तार्थताऽपि कथमित्याह—विषयेत्यादि । तदुपाधावेवेति—तथैवानन्त्यव्यभिचारदोषापाताभ्न स उपाधेय इत्येवार्थः । यदृच्छासन्निवेशित इति—यदृच्छा शृङ्गग्राहिकया सङ्केतनं तस्याः सन्निवेशः समर्पणं जातमत्रेति यदृच्छासन्निवेशितः सजातीयशून्यो देवदत्तादिरर्थः । तत्र चानन्त्यव्यभिचाराभावादुपाधिनैव सम्भवति । वाच्यवाचकसम्बन्धसमय इति नोपाधिरपेक्ष्यते । वक्तुः स्वेच्छया कल्पितसंज्ञाशब्द एव तत्प्रवृत्तावुपाधिरिति तु ये व्याचक्षते ते तिमिरपटलान्तरितदृशो नार्थाश्रयमवलोकयन्ति । सिद्धः क्रियमाणतया निर्देशशून्यः । पदार्थस्य पदोद्देश्यस्य धर्मिणः प्राणिनः प्राणा हानोपादानयोग्यतेति यावत्, तत्प्रदः प्राणपदः । विशेषणं विविच्य व्यवस्थापनं विशेषः सजातीयाव्यावर्त्तनमित्यर्थः,(१) तत्र हेतु-

---

(१) विशेष इत्यत ऊर्द्ध्वं तदाधानमितिवाक्यं पूरणीयं टीकाग्रन्थविशुद्धय इत्यनुमीयते ।

"न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौ"रिति। द्वितीयो गुणः। शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते। साध्यः पूर्वापरीभूतावयवः क्रियारूपः।

डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन

विशेषाधानहेतुः। गौः गोपदोद्देश्यः सास्नादिमानयं स्वरूपेण निरुपहितस्वलक्षणमात्रेण न गौः न गोविषयव्याहारव्यवहारभाजनं, नागौः नान्यव्यवहारगोचरः। लब्धसत्ताकं जातिविशेषोपग्रहाल्लब्धसत्ताकं(१), विशिष्यते विशिष्टव्यवहारपात्रं क्रियते। पूर्वेत्यादि—पूर्वापरीभूताः कार्यकारणरूपतया सन्तानीभूता अवयवा निष्पादकान्यङ्गानि इन्धनाहरणादीनि यस्याः क्रियायाः पाकादिप्रधानकार्यनिष्पत्तेः सा तथोक्ता। सा च क्रियमाणतया निर्देश्यत्वात् साध्यपदप्रतिपाद्या। अन्त्यं व्यवच्छेद्यस्वलक्षणं बुद्धिद्वारा निर्ग्राह्यं यस्य तदन्त्यबुद्धिनिर्ग्राह्यम्। डित्थादिशब्दानां स्वरूपं डित्थादिशब्दा एव। तत्स्वरूपं कीदृगित्याह—संहृतक्रमेति। क्रमणं क्रमो गवादिपदवदुपाधिप्रत्यया-दुपाधेयं प्रत्यायनं तत् संहृतं सम्यक् हृतं निरस्तमविद्यमानं

---

(१) महासत्ताकं जातिविशेषोपग्रहाल्लब्धसत्ताकमित्यादिः पाठः स्यात्। उपरिदर्शिते तु असंलग्नमनुवादमात्रम्। "सत्त्वे निविशतेऽपैती"त्यादि भाष्योक्तं गुणलक्षणमेव प्रकारान्तरेणोपरि आख्यायते। तद्विचारस्त्वाकरतो द्रष्टव्यः।

सन्निवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति । गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः । परमाण्वादीनान्तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम् । गुणक्रियायदृच्छानां

---

यत्र । क्वचिदिति(१) धर्मप्रत्यायनादित्यर्थः । उपाधित्वेन शाब्दव्यवहारयोग्यतानिर्वाहकत्वेन । इति पूर्वोक्तानुसारेणेयं चतुष्टयी जातिगुणक्रियास्वलक्षणमात्ररूपा प्रवर्त्ततेऽनयेति प्रवृत्तिस्तन्निमित्तम् । ननु परमाण्वादिपदानि जातिनिमित्तानि तावन्न भवन्ति । परमाणुत्वमहत्त्वादीनां(२) जातित्वाङ्गीकारे पृथिवीत्वादिना जातिसङ्करप्रसङ्गात्, पृथिवीत्वादेर्घटादौ परमाणुत्वात्तेजोऽम्भःपरमाण्वादौ परस्परं परिहृत्य वर्त्तमानत्वेन पार्थिवपरमाण्वादौ समावेशात् । नापि गुणनिमित्तकानि, रूपादिचतुर्विंशतौ परमाण्वादीनामगणनात् । नापि क्रियायदृच्छयोरन्तर्भावः, पूर्वापरीभूतावयवत्वहानादनेकव्यक्तिकत्वाच्चेत्याशङ्क्य गुणनिमित्ततायामन्तर्भावयति—परमाण्वादीनामिति—भावपरोऽयं निर्देशः गुणमध्यपाठादिति—(३) परिमाणादिभेदतया

---

(१) धर्मिप्रत्यायनादिति पाठः स्यात् । क्वचिदित्युपक्षिप्तोऽशं उपलभ्यमानकाव्यप्रकाशपुस्तकेषु न लभ्यते । अथवा क्वचिदित्यायंशो न सम्यक् । प्रदीपे (काव्यमाला २४ पृ०) उद्धृतपाठस्तु सम्पूर्ण इतः किञ्चिद्भिन्नश्च ।

(२) महत्त्वादीनामिति विकृतः पाठः 'क'पुस्तके ।

(३) अयमंशो विपर्यस्तावयव इव प्रतीयत आदर्शपुस्तके ।

वस्तुत एकरूपाणामन्याश्रयभेदाद्भेद इव लक्ष्यते यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्।

हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधान-

---

तत्पठनेनैव संग्रह इति भावः। परिष्कृता भाषा परिभाषा पदार्थविवेचकाचार्याणां युक्तियुक्ता वाक्, ततो ज्ञातं पारिभाषिकं ततस्तन्निमित्तीकृत्य प्रवर्तमानानां परमाण्वादिशब्दानाम्। गुणशब्दत्वमिति गुणत्वमित्यतोऽनन्तरो विशेषः। ननु कुमुदकौमुदीकुन्दकर्पूरकरिदन्तादिगते शैत्यादौ क्षीरकनकादिधाम्नि च पाकादौ शुक्लबहुलपरिवृत्तिप्राप्तन्यूनाधिकभावकलाऽऽदिकलितात्मनि चन्द्रादौ च तत्तद्वैधर्म्यदर्शनान्नानात्वेन व्यवतिष्ठमाने पूर्वोक्त एवानन्त्यव्यभिचारदोषः सङ्केतग्रहनिग्रहणमर्याप्त इत्याशङ्क्याह-गुणेत्यादि-यदृच्छाविषयो देवदत्तादिर्यदृच्छा। आश्रयभेदादिति-शवलाधवलागतगोत्वादिसामान्यवदनुगतव्यवहारान्यथाऽनुपपत्त्या प्रत्यभिज्ञया च भेदोल्लेखप्रमाणाबाधादाश्रयोपाहित एव भेदः पर्यवस्यतीत्यर्थः। आलम्बनं प्रतिबिम्बाश्रयः।

जातिरेवेति पक्षं व्याचष्टे हिमेति-परमार्थतो(१) भिन्नेष्विति हिमादिगतशुक्लादीनां तारतम्यादिवैषम्यदर्शनात् घटादौ विद्यमान एव च नीलादीनामाविर्भावतिरोभावदर्शनाच्च सामान्यवदेक-

---

(१) भिन्नेष्विति सम्प्रदायसिद्धः पाठः। अभिन्नेष्विति पाठे उत्तरांशोऽनर्थक इव प्रतिभाति।

प्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यं, गुडतण्डुलादि-पाकादिष्वेवमेव पाकत्वादि । बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्ति-रूपा गुणा इति भावः। अभिन्नादेकाकारादभिधानादेकाकाराणां प्रत्ययानामुत्पत्तिः । ततः शुक्लत्वादि सामान्यं शुक्लादि-गुणेषु शुक्लादिपदप्रवृत्तिनिमित्तं, ततस्तद्वत्यपि गौणः शुक्लादिपद-प्रयोग(१) इत्यभिप्रायः । गुडतण्डुलादीति—गुडादिपाको रूपादि-परावृत्तिलक्षणस्तण्डुलादिपाकेन पूर्वद्रव्यविनाशापूर्वद्रव्योत्पत्ति-लक्षणेन कथमेको भवत्विसाशयः। बालवृद्धेत्यादि—वृत्तौ चकार-वाकारौ पूर्वोक्तसमुच्चयौपम्यार्थौ व्यत्ययेन योजनीयौ(२)। शुका-दीति—स्वरादिभेदाद्वैधर्म्यप्रकटनपरम् । प्रतिक्षणं भिद्यमानेष्विति—वर्त्तमानक्षणे हि स्थूलतयोपलभ्यमानो डित्थस्तदव्यवहितपूर्व-क्षणे तथाऽऽकाररहितात्तस्मादन्य एवाङ्गीक्रियते, तत्तदवस्थावत-स्तथा तथा निष्पत्तिस्वीकारात् । ततश्च यथा बालाद्युदीरित-डित्थादिपदेषु कालादिभेदाद्भिन्नेष्वनुगतव्यवहृतिदर्शनात्सामान्यं

(१) 'गुणाः शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती'त्याद्यमरसिंहानुशासनमेतदुपयोगि ।

(२) एवमप्यन्ये—येषां मतमिवार्थेन वा-शब्देन च शब्दस्य स्थानविनिमयादितिगर्भमुद्धृतं प्रदीपे (२५पृ०)। बीजञ्चास्याः कल्पनाया उपरिप्रकटितम् । इवार्थे वा शब्दस्य प्रयोगे प्रमाणम् "इव-वद्वा-यथाशब्दा" इत्यौपम्यवाचकपरिगणने आचार्यो दण्डी, 'कृष्णो गर्जति चातिदर्पितमदो दुर्योधनो वा शिखी'"त्याद्या अभियुक्तप्रयोगाः ।

निमित्तमित्यन्ये। तस्मात् अपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च न दर्शितम्।

कल्प्यते तथा डित्थादिष्वर्थेष्वपि स्थौल्यादिमत्सु कल्पनीयमिति भावः। अलं वा(१) चकारवाकारव्यत्ययकष्टकल्पनया। डित्थादिशब्देषु डित्थाद्यर्थेष्विति चोपलक्षणं सर्वेष्वेव गवादिपदेषु सामान्यसङ्कलितेषु तथाभूतैरेवार्थैः सह सम्बन्धः परिच्छिद्यत इति नेया वृत्तिः। अस्मिंश्च व्याख्याने वा-शब्दोऽपि समुच्चयार्थः। स्वगतमेव सामान्यं निमित्तीकृत्य डित्थादिपदानि प्रवर्त्तन्त इति व्याख्यातारः प्राचीनयुक्त्यैवोन्नासिताः(२)। एतेन गुणक्रियेत्यादिवृत्तेरपि(३) जातिरेवेति पक्षनिक्षेपविक्षिप्तः श्रीधरसान्धिविग्राहिकोऽपि समपास्तो बोद्धव्यः। गुणादिषु काल्पनिकभेदवत्स्वकाल्पनिकमेव सामान्यमिति हि तस्य परं रहस्यं, तच्च जातिवादिभिर्नानुमतं, परमार्थतो भिन्नेष्विति वदता ग्रन्थकृते-

(१) अथवा 'क' पाठः। प्रदीपेऽपि कष्टकल्पनैषाऽनयैव भङ्ग्या मतान्तरोपक्षेपेणापास्ता।

(२) स्वगतसामान्यस्याभावः प्रतिक्षणं भिद्यमानेष्वित्यादिग्रन्थव्याख्याने टीकाकृता प्राग्दर्शितम्। अथवा भाष्यकारमते डित्थादिशब्द एवोपाधिरिति तन्मतेऽपि शब्दस्य नानात्वात्तन्निष्ठा जातिरेव शक्याऽङ्गीकार्येति व्याख्यातृमतनिष्कर्षः प्रदीपे उद्धृतः ( २५ पृ० )। चण्डीदासमतञ्च सावज्ञमपहसितं तत्रेति प्रभातः प्रतीयते।

(३) 'गुणक्रियायदृच्छानां वस्तुत एकरूपाणामि'ति वृत्तौ ग्रन्थस्तथैव व्याख्यातुं चेष्टितः श्रीधरेण। तद्युक्तिश्च जातिवादिमीमांसकचक्रसम्मता नेति टीकाकृतां साटोपमुद्घोषणम्।

(११) स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ।८।

स इति साक्षात्सङ्केतितः । अस्येति शब्दस्य ।

---

वापास्तश्च । नचात्राभिधेष्विति नञ्निक्षेपो युक्तः, तद्वानित्युत्तरग्रन्थाननुगुणत्वात् (१) । को हि नामानुन्मत्त एकस्मिन्वस्तुनि वस्तुद्वयस्यैवोपपद्यमानामेकाभिधानप्रत्ययोत्पत्तिमनादृत्य प्रमाणीकृतमिथ्याभेदः पुनस्तदुपपत्त्यर्थमेकार्थमुपाधिमनुसरेत्-इत्यापाततः क्रीडया कपालं विपाट्य पुनः सन्धानायौषधनिर्लेपः। जातिः साधारणधर्मः । तद्वान्सामान्यविशिष्टः-सामान्यसमालिङ्गितत्वादेव निरवकाशीकृतानन्त्यव्यभिचारदोषसमयग्रहणगोचर इति नैयायिकादिभिरङ्गीक्रियते । अपोहस्तदितरव्यावृत्तिरेव समयग्रहणविषयः, स्थिरस्य सामान्यस्याभावात् इति क्षणभङ्गवादिनो मन्यन्ते । गौरवं विस्तारः । प्रकृतेति-काव्याङ्गनिरूपणमेवास्माभिरारब्धं, तच्च लोकसिद्धेनैव शब्दार्थव्यवहारेण निर्वहतीति किमार्द्रकवणिजो वहित्रचिन्तयेति भावः। उपसंहरति—न तद्दर्शितमिति ।

स इति विप्रतिपद्यमानस्वरूपः । मुख्य इति अभिधेति शेष इति सम्बन्धः । शब्दार्थविभागनिरूपणप्रकरणे चात्र व्यापाराणां निर्वाचनं तत्र चोपाधयस्तथाविभागबीजमिति, प्रकाशकम् । अननुसंहितोपाधेरुपहितप्रत्ययायोगाल्लाक्षणिके वक्तव्ये

---

(१) तथासति तद्वान् वा शब्दार्थ इत्यंश उन्मत्तजल्पितमिव पुनरुक्तकल्पः प्रतिभाति ।

(१२) मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥९॥

'कर्मणि कुशल' इत्यादौ दर्भग्रहणाद्ययोगाद् 'गङ्गायां घोषः' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासम्भवा-न्मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च

---

प्रथमं लक्षणाविवेकमाह सूत्रकृत्–मुख्यार्थेति । बाधोऽन्वयानुप-पत्तिः। तेन मुख्येन योग इति प्रसङ्गप्रसक्तः। अथ विकल्पे। प्रयो-जनादित्युद्देश्ये पञ्चमी। लक्ष्यते प्रतीयते। यत् यया(१)। आ-रोपिता बाधप्रसरादेव कार्यकरी, औत्पत्तिकनये स्वाभाविकेतरा, ऐश्वरसङ्केतपक्षेऽपि तदनुभाविता। क्रिया शक्तिः।

कुशान् लातीति कुशल इति व्युत्पत्तिलभ्यस्यार्थस्य दक्ष-रूपेऽर्थेऽसम्भवात्तमपहत्य सदसद्विवेचकत्वसाधर्म्यसम्बन्धं पुर-स्कृत्य कुशलपदमेवमिदमनादिप्रसिद्ध्या प्रयोजनाभिसन्धानं विनैव प्रयुक्तमुक्तरूपमर्थमाचष्टे यया सा रूढिलक्षणेत्युच्यते वृत्तिः। एतच्च प्रकृतिप्रत्ययार्थविभागकल्पनालभ्य एव यौगिकेषु मुख्योऽर्थ इति वैयाकरणरीत्योदाहृतम्(२)। वस्तुतस्तु भिन्न एव

---

(१) एवमपि लुप्ततृतीयान्तावयवाव्ययपदप्रयोगोऽस्यैवोल्लास-स्यान्तिमे सूत्रे 'यत्सोऽर्थान्तरयुक् तथे'ति। यदिति वाक्यार्थनिर्देश इति वा व्याख्यानम्।

(२) वस्तुतस्तु मम्मटप्रभृतयः काश्मीरकालङ्कारिकवर्या बहव एव वैयाकरणरीत्यनुप्राणितमता इतरत्रापि तथोपलम्भादिति कोविदानां दर्शनम्। एवमप्यभिधावृत्तिमातृकाऽऽदिषु भट्टमुकुलादयो मन्यन्ते।

सम्बन्धे रूढितः प्रसिद्धेः, तथा गङ्गातटे घोष इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ।

(१३) स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥

---

व्युत्पत्तिप्रवृत्तिनिमित्ते । अन्यथा गच्छतीति गौरिति व्युत्पत्त्या 'गौः शेते' इत्यादौ गोपदमपि लाक्षणिकमेव स्यादिति(१) । 'कलिङ्गाः साहसिकाः' इत्यादि रूढावुदाहार्यम् । तथेति गङ्गापदेन व्युत्पादने गङ्गात्वेन प्रतिपत्तौ सातिशयतया यथेति भावः । (२)स्खलदभिधेयप्रत्ययान्तरितप्रत्ययो योऽर्थस्तन्निष्ठस्तद्विषयकः ।

तदेतल्लक्षणाद्वयं सामान्यत उक्त्वा तद्विभागमाह—स्वेति । तात्पर्यवृत्तिबोध्यपदार्थान्वयानुप्रवेशनिष्पत्तये(३)परस्यान्वयमुख्याङ्गस्याक्षेपो झटित्युपनयनं यया सा उपादानेन स्वार्थापरित्यागेन लक्षणा; परस्यान्वयाङ्गस्य मुख्यसम्बन्धिनस्तटादेः प्रतीत्यर्थं स्वस्यात्मीयस्य समर्पणं प्रत्याजनमुत्थापयति यत्सा उपलक्षणमात्रेण लक्षणा—इति ताभ्यां कार्यकारणभूताभ्यामुपादान-

---

( १ ) सर्वमेतदनूदितप्रायं साहित्यदर्पणे दृश्यते ।

( २ ) सान्तरार्थनिष्ठ इति मूलग्रन्थाट्टीकांशः पूरणीयः । अत एव सान्तरः स्खलदित्यादिरत्र टीकायां पाठः स्यात् ।

( ३ ) एतत्तूपलक्षणम् । स्वस्य शक्यार्थस्येत्येवास्तामिति बहवः ।

'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते । तत्र उपादानेनेयं लक्षणा ।

'गौरनुबन्ध्य' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं

---

लक्षणाभ्यामुपहितेत्यर्थः । (१)शुद्धैव तावद्द्विविधा, गौण्यन्तर्भावे तु भेदान्तरमप्यस्तीति भावः। सा पूर्वोक्तोभयरूपा प्रत्येकं द्विधा । 'कुन्ताः प्रविशन्ती'त्यादौ च कुन्तादीनामभिहितानां किमिति पुनर्लक्षणमिति न चोदनीयम्, अभिहितानामपि तेषां स्वातन्त्र्येणान्वयप्रवेशो नास्तीति विशेषणतया तत्प्रवेशार्थं पुनर्लक्षणीयत्वात् । स्वसंयोगिन इति—लक्षणानिर्द्धारक-(२)सम्बन्धसूचनम्। इह हि सर्वत्रैव पदे संसृज्यमानानि स्वलक्षणानि तावन्नाभिधेयानि, तेषामानन्त्यव्यभिचाराभ्यां सङ्केतनस्याशक्यत्वात्। न च सामान्यक्रोडीकाराच्छक्यं तदिति वाच्यं, तथाऽप्यानन्त्यादिदोषस्य, गामानयेत्यादौ प्रस्तुतव्यक्तिविशेषालाभस्य च, प्रसङ्गात्, इत्यादि (३)ध्वनिसिद्धान्तसंग्रहोक्तयुक्त्या निरस्तुमशक्यत्वात्। तत-(४)श्चाभिहितायां जातौ तन्मात्रस्यान्वयाविरहात्तदुपहितासु व्यक्तिषु लक्षणया बोधितार्थ-

---

(१) 'लक्षणा तेन षड्विधे'ति ग्रन्थव्याख्याने टीकाकृता स्वयमेवैतत्प्रपञ्चयिष्यते ।

(२) निर्भारक—'क' पाठः । उभयत्र निर्वाहकेत्यर्थः ।

(३) 'इत्यादी'त्यंशः 'क' पुस्तके प्रमादपतित इवानुमीयते ।

(४) 'ये' इति कर्त्तृपदं 'क' पुस्तके न दृश्यते ।

मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते, 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इति न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या । न ह्यत्र प्रयोजनमस्ति । न वा रूढिरयम् । व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते । यथा क्रियतामित्यत्र कर्त्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डी-

---

तात्पर्यापरनाम्ना द्वितीयलक्षणयाऽन्वयो बोध्यत इत्याहुर्ये तान् प्रत्याह–गौरित्यादि । अत्रान्वयबाधार्थसन्धानविरहलक्षणा लक्षणा न(१) । त्विति कुवैरिणं सूचयितुम् । श्रुत्या सामानाधिकरण्यरूपया वेदाख्यया निष्कम्पप्रामाण्यया सञ्चोदितं विहितमनुबन्धनं कथं मे स्यादित्युत्कण्ठितेव जातिर्झटित्येव (?) स्वलक्षणमालिङ्गतीति विदग्धोक्तिः । आक्षिप्यते स्वाभिधया बोध्यत इत्यर्थः । विशेष्यं व्यवच्छेद्यं, क्षीणशक्तिः शब्दबुद्धिकर्मणां विरम्य व्यापारविरह इति नयेन विश्रान्तस्वरूपा । विशेषणे व्यवच्छेदके, अर्शआदित्वादच् (२) । न्यायादिति व्यवस्थितसिद्धान्तादित्यर्थः । नह्यत्र प्रयोजनमस्ति न वा रूढिरियमिति —जातिव्यक्तिपदार्थौदासीन्येन हि लोकप्रसिद्धिमाश्रित्य रूढिप्रयोजने चिन्त्येते । तेनान्वयप्रतिपत्त्यादिफलस्यानादिप्रयोगस्य च सद्भावेऽपि न लक्षणेति भावः । ननु तर्हि व्यक्तिप्रतीतिः कथं जातित इत्याह —

---

( १ ) लक्षणाऽपीति चासङ्गतः पाठस्तत्रैव । विरहलक्षणं 'क' पाठः।

( २ ) अर्शआदित्वादच् इति पाणिनीयमते। विशेषणं व्यवच्छेद्यमस्यास्तीति व्युत्पत्तिः।

मित्यादौ गृहं भक्षयेत्यादि च। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते, श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्।

---

व्यक्तीति।—अविनाभावादाक्षेपे दृष्टान्तमाह–यथेति। कर्ता सम्मुखीनः। कर्म प्राकरणिकं कटादि। एवमविनाभावेनाक्षेपमुक्त्वा प्रस्तुतान्वययोगतयाऽपि व्यक्तेराक्षेपो योग्य इति व्यक्तं योग्यविशेषाक्षेपं दृष्टान्तयति–प्रविशेति। अत्रापि प्रकरणादिसाहाय्यं द्रष्टव्यम्। एतच्च सङ्केतितया जात्याऽभिधाव्यापारितया तदविनाभाविन्या समाक्षिप्तासु व्यक्तिषु द्वितीयलक्षणया संसर्गबोधनमिति स्वीकुर्वतां भट्टानां गौरवनियन्त्रितेन ग्रन्थकृतोक्तं, न तु पारमार्थिकम्, अविनाभावस्य(१) कर्मगतस्यातदनुसंहितस्यानाक्षेपकत्वदर्शनात्। इहापि तथैव कल्पनीयत्वेन तदनुसन्धानस्यानुपलब्धिबाधिततया जातिमात्राक्षेपाङ्गीकारे शाब्दान्वयस्य शब्देन बोधयितुमशक्यतया च तत्र वृत्त्यन्तरस्वीकारान्नासौ लक्षणा, पूर्वोक्तन्यायात्; नापि तात्पर्यं, तस्य संसर्गमात्रनैयत्यादित्यादि ध्वनिसिद्धान्तसंग्रहे विस्तरः। श्रुतार्थापत्तेरिति–शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति दर्शने पीन इत्यादिश्रुत्या(२) रात्रौ भुङ्क्त इति वाक्यशेषः कल्प्यते, श्रुतार्थपात्तिरिति चोच्यते। प्रभाकरनये तु विशेषमनपेक्ष्य कल्पनागौरवभयादर्थमात्रं

---

(१) धूमगतस्य इतीवास्फुटः पाठ आदर्शपुस्तके।

(२) श्रूयत इति श्रुतिरिति व्युत्पत्त्योच्चारितमात्रे शब्दे यौगिकार्थग्राही श्रुतिशब्दोऽत्राभिहितः, न तु रूढोऽपौरुषेयवेदांशवचनः।

'गङ्गायां घोष' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये 'गङ्गा'शब्दः स्वार्थमर्पयति—इत्येवमादौ लक्षणेनैषा लक्षणा। उभयरूपा चेयं शुद्धा, उपचारेणामिश्रितत्वात्।

---

कल्प्यते, न शब्द, इति सर्वत्रैवमनुपपत्तिरर्थान्तरं कल्पयन्ती अर्थापत्तिर्निगद्यते। तच्च वाक्यार्थप्रत्ययानन्तरमेव तथाविधः शब्दोऽर्थो वा प्रतीतिपथातिथिर्भवतीति प्रतीतस्यैवार्थस्यापर्यवसानात् प्रतीत्यपर्यवसाने प्राणधारणाया लक्षणाया नावकाशः।

लक्षणलक्षणामुदाहरति–गङ्गायामिति। तटस्य घोषाधिकरणता द्वितीयलक्षणया गम्यते, तस्याः सिद्धये प्रतीतये स्वार्थं मुख्यार्थं लक्षणाबीजतटसम्बन्धाधानं प्रथमतोऽसंसृष्टतटप्रत्ययेनार्पयति स्खलद्रूपेण प्रत्याययतीत्यर्थः। शुद्धा उदाहृता, तदितरा त्वन्यत्र द्रष्टव्येति भावः। न तु शुद्धैवेति ज्यायसी व्याख्या,(१) वाहीकादिविषये गौरित्यादिप्रयोगे लक्षणलक्षणाऽऽदेर्गौणतादर्शनात्। उपचारेणामिश्रितत्वादिति—अत्यन्तं विशकलितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रमभेदप्रतीतिर्वा वक्ष्यमाणा उपचारः(२)। स च 'गौर्वाहीक'

---

(१) गौण्यामपि एतल्लक्षणो लक्षणाभेदः सम्भवतीत्याशयः। माणिक्यचन्द्रादिभिस्तु 'गौर्वाहीक' इत्यादि प्रयोगादुक्तोदाहरणे भेदः स्वीकृतः। 'गौण्यां तन्मात्रस्य प्रयोजनत्वात्, शुद्धभेदयोस्तु मुख्यस्य प्रयोजनान्तरस्य भावात्, नतु शुद्धायामभेदप्रत्ययस्याभावा'दिति प्रदीपकृतः संक्षेपः समाहरणीयः।

(२) एवं काव्यप्रकाशदर्पणे साहित्यदर्पणे च भेदप्रतीतिस्थगन-

अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्ध-मात्रप्रतीतौ तु 'गङ्गातटे घोष' इति मुख्यशब्दाभिधाना-ल्लक्षणायाः को भेदः ?

---

इत्यादौ दत्तपदो नोक्तयोरुदाहरणयोः प्रसरतीत्यर्थः। तदेत-दाह—अनयोर्भेदयोरिति(१)-उदाहृतयोरिति शेषः। लक्ष्यस्य तटादेः। लक्षकस्यान्वयबाधद्वारा लक्षणामुज्जीवयतः सरिदादेः। भेदरूपं तटस्थत्वं(२)भेदाभेदौदासीन्यं—न च भेदस्थगन-मेवाभेदप्रतीतिः(३), प्रादुर्भाव्यफलविशेषानुपनायकत्वाद्रूढौ भेदस्थगनफलाभावाच्च। तत्त्वप्रतिपत्तौ गङ्गादिस्वप्रतिपत्तौ। ननु माभूत्तत्त्वप्रतिपत्तिः, तत्सम्बन्धरूपस्य तद्भेदराहित्यस्यापि प्रतीतौ तदुपनीतकिञ्चिच्छैत्यादिप्रतिपत्तिर्भविष्यतीत्याशङ्क्याह—गङ्गासम्बन्धेति। गङ्गातट इत्याद्युक्तेऽपि हि तत्सम्बन्धप्रतीतिः किञ्चिच्छैत्याद्यनुगुणा भवत्येव, तथा सति ऋजुमार्गेण सिद्धं तं को नामानुन्मत्तो वक्रेण साधयेत् ? तथा चाभाणकः—

---

मात्रमेवोपचारपदेनोद्दिष्टं नत्वत्रोल्लिखितद्वितीयकक्ष्याविषयोऽपि। 'उपचारो गुणवृत्तिर्लक्षणे'ति सामान्यलक्षणं ध्वन्यालोकलोचने प्रायश उपर्युक्तटीकाकृत्कृतविवरणानुगुणम्।

(१) शुद्धभेदयोरिति यावत्।

(२) ताटस्थमिति तु साधारणसम्मतोः मूले पाठ। तटस्थत्व-मिति पाठस्तु श्रीधरेण चण्डीदासेन तदनुसारिभिरन्यैश्च स्वीकृतः।

(३) 'न चे'त्यंशः 'क' पुस्तके न विद्यते।

(१४) सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।

आरोप्यमाणः आरोपविषयश्च यत्रानपहुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ।

---

'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजे'दिति । एवमेवंविध-लाक्षणिकप्रयोगोच्छेद एव स्यादित्यर्थः। को भेदः फलातिशयः । ननु गौर्वाहीक इत्यादावपि वाहीकादेर्गोतादर्थ्यादिरेवाविवेकित्वाद्यतिशयप्रतीतिफलोपासनीया, गवादिभेदराहित्यमात्र-प्रतीतौ हि गोगतधर्मादिसदृशधर्माधिकरणत्वमात्रप्रतीतिफलायां 'गोसदृशो वाहीक' इत्यादिप्रयोगानिर्विशेषत्वम् ; न चैतद्भेद-प्रत्ययस्थगनादेव तद्धर्मातिशयप्रत्यय इति न्याय्यं, नचैवं-विधयुक्तिप्रसरानिषेधे प्रकृतेऽपि जागार्त्यज्ञाडिण्डिमारावः । तस्मा-दलीक एवैतावानुपचारकैतवविवेचनाय प्रयास इति चेत्—सत्य-मेतत् । किन्तु प्राचीनप्रणयमनुरुन्धानेन ग्रन्थकृतेत्थमभिहितम् । (१)वस्तुतस्तु सम्बन्धस्वरूपभेदमाश्रित्य कथञ्चिन्निर्वाह्यो गौण-शुद्धविभाग इति । एतच्च सम्बन्धभेदमात्राद्वृत्तिभेदाङ्गीकारो-ऽभिप्रसङ्गक इति मत्वा लक्षणायामेव गौणीमन्तर्भाव्य परि-गणयता सूक्ष्मदृशा सूचितमेव मन्तव्यं, सर्वथैवाभिधाऽध्यासश्च प्रयोजनमिति च साध्यवसानगौणे वक्ष्यति । यद्वा

---

( १ ) प्राचीनमीमांसकानां तदनुजीविनां भट्टमुकुलादीनां मत-माश्रित्य प्रायशोऽनेन ग्रन्थकृताऽत्र शब्दव्यापारविचाराख्यलघुतर निबन्धे च प्रायासीति सत्यमेव तावद् तद्घोषणम् । इत ऊर्ध्वम् एतच्चेत्यंशष्टीकाकृतो व्याख्याचातुरीं प्रकटयति ।

(१५) विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका।

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णेऽन्यस्मिन्नारोपविषये सति सा साध्यवसाना स्यात्।

भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा।
गौणौ शुद्धौ च विज्ञेयौ—

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ, 'गौर्वाहीक' इत्यत्र 'गौरय'मित्यत्र च। अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयत इत्यन्ये। साधारण-

---

सम्बन्धान्तरं लक्ष्यलक्षकयोः साक्षाद्वृत्तपदं भवति, सादृश्यन्तु गोवाहीकादेर्धर्मसाजात्यरूपं न तथेति गौणशुद्धव्यपदेशः। एतच्च व्याख्यानं प्राचीनटीकाऽनुरोधेन(१) द्रष्टव्यम्। वस्तुगत्या त्वनयोरित्यादिप्रकृतोदाहृतिरहस्यप्रकटनमात्रपरं, "तटस्थे लक्षणा शुद्धे"तिमतदूषणपरं वा(२), नत्वन्ययोगव्यवच्छेदपरं मन्तव्यम्। उपचारस्थलपक्षे सादृश्यबीजे आरोपाध्यवसाने। अनिगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिरारोपः, तत्कर्त्री सारोपा।

---

(१) केयं प्राचीनटीकेति नावगम्यते। अथवाऽत्र प्राचीनमतपरामर्श एव विवक्षितः।

(२) 'तटस्थे लक्षणा शुद्धे'ति भट्टमुकुलमतम्। न तत्र नव्यैरालङ्कारिकैरास्था स्थाप्यते।

गुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे । उक्तं चान्यत्र-

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।

लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता॥इति।

---

अन्या एका । तुः प्रकारान्तरसूत्रणपरः । पुनःप्रत्यायन-योग्यतेति प्रत्युक्तिः, यद्वा परार्थस्य गुणमात्रप्रत्यये नास्ति किञ्चन फलाधिक्यम् । 'गङ्गायां घोषः', 'गौर्जल्पती'त्यादौ परार्थ-गुणमात्रस्यान्वययोग्यत्वं नास्तीति सर्वथा तुच्छमेतत् । एतेना-भेदेनैकात्मतया लक्ष्यन्ते लक्षणाविषयीक्रियन्त इति व्याख्यान-मपहस्तितं (१), साधारणगुणाश्रयत्वेन परार्थ एव न तु तद्गतगुणातिरेकोऽपि, तस्य वृत्त्यन्तरगम्यतयाऽप्रतिपाद्यत्वादिति भावः । अपरे पूर्वादिद्वयविलक्षणाः साम्प्रदायिकाः ।

उक्तञ्चान्यत्रेति-लक्षणातो भिन्ना गौणीति ये मन्यन्ते तन्मतं रिक्ततरमिति सूचनपरम् । प्रतीयतेऽनयेति प्रतीतिः शब्दशक्तिः । जातिमात्रमभिधाविषय इति नये लक्ष्यमाणस्याक्षिप्यमाणस्य लक्षणस्य ये गुणाः, यद्वा लक्ष्यमाणा मुख्यार्थविशेषतया प्रतीयमाना ये गुणास्तद्योजनात्सजातीयगुणवत्त्वलक्षणात्सादृश्यादुज्जीविताया

---

(१) 'न तु परार्थोऽभिधीयते' इति वृत्तिग्रन्थात् नात्र मते लक्षणा-शक्तेरवकाश इति। 'अन्योऽर्थो लक्ष्यते यत् सा लक्षणे'ति स्फुटं सूत्रकृता-माशयोपलम्भादिति चण्डीदासव्याख्यानिष्कर्षः। लक्षणाविषयीक्रियन्त इति व्याख्यानं रुचककृते सार्थकनाम्नि सङ्केते नास्ति, नापि माणिक्य-चन्द्रकृते विस्तृततरे सङ्केते तदुपलभ्यते। श्रीधरोद्भावितं विवेकस्थित-मेतत् स्यादिति सम्भाव्यते । परमस्मदनुपलब्धस्य विवेकग्रन्थस्यात्र त्रुटनान्नेदं निश्चीयते ।

अविनाभावोऽत्र सम्बन्धमात्रं, न तु नान्तरीयकत्वम्। तथात्वे हि 'मञ्चाः क्रोशन्ती'त्यादौ न लक्षणा स्यात्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्।

---

वृत्तेर्गौणतेति। साक्षात्सम्बन्धराहित्याद् गौणी न लक्ष्यत इत्यर्थः। नन्वेतावता च वैषम्यं नात्यन्तवैजात्यात्रहम्; तथाहि मुख्यार्थबाधसम्बन्धरूढिप्रयोजनान्यतरानुरोधस्तावदुभयत्र समानः, साक्षादसाक्षात्त्वेन सम्बन्धमात्रवैचित्र्यं किञ्चिदवान्तरवैधर्म्यमाधत्त इति लक्षणाविशेष एव गौणी। अविनाभावोऽत्रेति--अविना सद्भावे भावमात्रमविनाभावो न तु विनाऽभाव इत्यर्थः। नान्तरीयकत्वं तदन्वयव्यतिरेकानुविधायित्वम्। तत्त्वे (१)नान्तरीयकत्वे। मञ्चा इति--मञ्चानाञ्चास्तपन्वयाद्यनुविधिः। ननु माभूदत्र लक्षणा, अन्वयाद्यनुविधानम् यथैव स्यादित्याशङ्कयाह--अविनेति। अविनाभावस्थलेऽनुमितिसामग्रीसम्भवेन शब्दव्यापार एव स्यादित्यर्थः। उक्तमिति(२)--श्लोककर्तृभिरेव जात्या स्वलक्षणाक्षेपमङ्गीकुर्वद्भिरस्माभिर्वा तन्मतमुपलिखद्भिः(२)। उपादानलक्षणायां शुद्धतयोदाहृतिः--आयुरिति--

---

(१) तथात्वे इति त्वन्यैर्माणिक्यचन्द्रादिभिर्धृतः पाठः।

(२) उक्तमेतच्च 'क' पाठः। श्लोककर्तृभिर्भट्टकुमारिलपादैरुद्धृत एव श्लोकांशे श्लोकवार्त्तिकस्थे उद्दिष्टमेतत्। अस्माभिः काव्यप्रकाशकृद्भिः 'गौरनुबन्ध्य' इत्यादिनोदाहर्तव्ये वृत्यन्ते विवेचितमिति टीकाकृदुक्तितात्पर्यम्।

'आयुर्घृतम्' 'आयुरेवेद'मित्यादौ च साद्दश्या-दन्यत्कार्यकारणभावादि सम्बन्धान्तरम् । एवमादौ च कार्यकारणभावादिलक्षणपूर्वे(१) आरोपाध्यवसाने । अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः, सर्वथैवाऽभेदाव-गमश्च प्रयोजनम् । शुद्धभेदयोस्त्वन्यवैलक्षण्येनाऽव्यभि-चारेण च कार्यकारित्वादि प्रयोजनम् । क्वचित् तादर्थ्या-दुपचारो यथा इन्द्रार्था स्थूणा 'इन्द्रः' । क्वचित्

---

एवेति न घृतपदप्रयोग इत्यर्थः । इदमिति घृतविषयताप्रकटनम् । साद्दश्यादन्यदिति कारिकागतान्तरपदविवरणम्(१) । एवमादा-विति—लक्ष्यतेऽनेन शब्दसामर्थ्येनेति लक्षणं लक्षणा-कार्यकारणभावादितो लक्षणं, तत्पूर्वं यथा स्यात्तथा(२) आरोपा-ध्यवसाने भवतः, तयोस्तत्कार्यत्वात् । लक्षणापूर्वे इति सुगम एव क्वचित्पाठः । भेदेऽपि वाहीकपदप्रयोगादुल्लिख्य-माने ताद्रूप्यप्रतीतिर्भेदस्थगयित्री । आरोपेऽध्यवसाने च सर्वथैवाऽभेदावगमो वाहीकादिपदाभावाद्भेदस्य बुद्ध्यनारोहा-दित्यर्थः । प्रयोजनमत्रान्तरप्रत्याय्यम् । अन्यवैलक्षण्येनारोपे, अव्याभिचारेणाध्यवसाने । तत्र हि भेदानुल्लेखे तादर्थ्यप्रतीति-दार्ढ्याद्व्यभिचारसम्भावनायाः सर्वथैव निरासो, न स्वार्थ आत्मानं व्यभिचरतीति । आरोपे तु स्थगितेऽपि भेदे तद्गन्धेन सर्वथा व्यभिचारनिरासाभावात् । अभेदप्रतीतिसहोदरात्मतया-

---

(१) सम्बन्धान्तरत इति कारिकागतस्य पदस्य व्याख्या ।

(२) लक्षणपूर्वमिति टीकाकृत्परिगृहीतः पाठः ।

स्वस्वामिभावाद् यथा राजकीयः पुरुषो 'राजा', क्वचिद्-
वयवावयविभावाद् यथा अग्रहस्त इत्यत्राग्रमात्रेऽ-
वयवे 'हस्तः'। क्वचित् तात्कर्म्याद् यथा अतक्षा 'तक्षा'।

(१७)—लक्षणा तेन षड्विधा ॥ १२ ॥

आद्यभेदाभ्यां सह। सा च—

ऽन्यवैलक्षण्यमात्रम्। एतच्चोभयत्र मुख्यप्रयोजनम्, अवा-
न्तरन्तु पूर्ववदभेदावगमः। क्वचिदित्यादि सम्बन्धप्रपञ्चनम्।
अत्र च रूढिप्रयोजने यथासम्भवं द्रष्टव्ये। अग्रहस्त इति—
समानाधिकरणविशेषणसमासमते लक्षणा। ये त्वग्रहस्त इत्य-
खण्ड एवायं शब्दो हस्ताग्रवाचकः, हस्तस्य अग्र इति वा
विग्रह इत्याहुः, तन्मते 'पीता कार्पटिकैर्गङ्गे'त्यवयवावयवित्व-
लक्षणायामुदाहार्यम्। अतक्षा गोपालादिः कुतोऽप्यभ्यस्तगृहादि-
निर्माणनैपुणो जातिविशेष एव हि मुख्यतस्तक्षपदवाच्यः।

षड्भिरुपाधिभी रूढिप्रयोजनोपादानलक्षणाऽऽरोपाध्यवसानै-
र्विधाः प्रकाराः कल्पनीया अस्या इति षड्विधा। न तु षट्-
प्रकारा, प्रकारान्तरसम्भवस्य प्रतिपादितत्वात्(१)। भिद्यते
आभ्यामिति भेदौ उपादानलक्षणे रूढिप्रयोजने वा। आद्यौ भेदौ,
ताभ्यां प्रकृताभ्यामारोपाध्यवसानाभ्यां प्रथममुक्तत्वात् ताभ्या-

(१) षोढेति बहुतरटीकाकृतां माणिक्यचन्द्राद्यानां व्याख्या। उपरि-
दर्शितो नयो लक्षणाविभागप्रसङ्गे साहित्यदर्पणेऽनुसृतः। प्रदीपकृता तु
कटाक्षितमेतदुपरि (काव्यमाला ६६ पृः)। मुद्रितप्रदीपोद्धृतचण्डी-
दासग्रन्थस्तूपरिदर्शितात्किञ्चिद्भिन्नः।

(१८) व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।

(१९) तच्च गूढमगूढं वा—

तच्चेति व्यङ्ग्यम् । गूढं यथा—

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

---

माद्यभेदाभ्यां सहेति ग्रन्थसङ्गतिः ।

एवंविधलक्षणाप्रपञ्चानुवादस्य तत्पृष्ठे व्यञ्जनोट्टङ्कनमेव फलमिति सङ्गोपितरहस्येन सूत्रकृता 'व्यङ्ग्येन रहिते'त्यादि कारिकया व्यञ्जनागम्यमर्थमुपाधाय लक्षणाविभागो दर्शितः । ततस्तदनुवादेनैव तामवतारयति—सा चेति । इममेवार्थं स्फोटयति(१)—प्रयोजनं हीति । अत्र प्रयोजनवत्त्यां व्यञ्जनामूलभूतायामुपादेयत्वेनानुवाद्यतया प्राप्तायां हेयाया अपि रूढिमूलाया अनुवादो विवेकसौकर्याय मन्तव्यः । गूढं काव्यार्थभावनापरिपक्वबुद्धिविज्ञमात्रवेद्यरहस्यम्, अगूढं तदन्यत् सहृदयेष्वन्येष्वपि सम्भावितवेदनम् । मुखमिति—अत्र विकसितत्वस्य कुसुमविस्तृतत्वे प्रसिद्धस्य स्मितेऽसम्भवाद्विस्तृतत्वमात्रं लक्ष्यते, ततस्तस्यैव विशेषोऽत्यन्तमनोहारित्वादिलक्षणः सहृदयहृदयङ्गमो व्यज्यते । एवं वशितत्व-

---

(१) 'स्फोरयति' 'क' पाठः ।

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥

तत्रोपदिशतीत्यनायासेन शिक्षादानमभिधेयवत्स्फुटं प्रतीयते।

(२०)—तदेषा कथिता त्रिधा ॥ १३ ॥

अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या च।

---

समुच्छलितत्वापास्तसंस्थत्वमुकुलितत्वोद्धुरत्वमोदनैः प्रश्लिष्टत्वोल्लसितत्वविषयसहस्रसञ्चारितत्वोच्छिन्नत्वयोग्यत्वजृम्भणानि लक्ष्यन्ते। तेषामेवातिशयो व्यज्यते। उपदिशतीति—अत्राविष्कारो लक्ष्यते। तदतिरेकश्च व्यङ्ग्यः। स चाभिधेयवत्स्फुटं प्रतीयत इति गुणीभूतः। ललितानि हस्तादिविन्यासविलासाः। अत्रेत्यादि प्रकृतविषयविवेकः। त्रिधेति—व्यङ्ग्यव्यतिरेकान्वयाभ्यामुपाधिभ्यां, तदाह वृत्तिकृत्—अव्यङ्ग्या गूढव्यङ्ग्याऽगूढव्यङ्ग्या चेत्यर्थः। अत्र चेत्थं प्रकारविकल्पना—लक्षणा प्रथमं द्विधा रूढा प्रयोजनवतीति च। तत्र रूढा उपादानोपलक्षणाभ्यां प्रत्येकमारोपाध्यवसानाभ्यां चतुष्टयी भूत्वा गौणशुद्धभावादष्टधा, प्रयोजनवती तूक्तभेदवती व्यङ्ग्यवद्द्वैविध्यात्षोडशविधा। (१)यत्र (२)धर्मी तटादिर्लक्षणीयस्तत्र धर्मः फलं, रामा-

---

(१) व्यङ्ग्यस्य गूढागूढत्वात्प्रत्येकं द्विधा भूत्वा षोडश भेदाः। एषैव सरणिर्विश्वनाथेन साहित्यदर्पणेऽनुसृता।

(२) 'यत्र च' इत्यादर्शपुस्तके पाठः।

(२१) तद्भूर्लाक्षणिकः—

शब्द इति सम्बध्यते । तद्भूस्तदाश्रयः ।

(२२) तत्र व्यापारो व्यञ्जनात्मकः ॥

कुत इत्याह—

(२३) यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥१४॥

---

ऽस्मीत्यादौ तु धर्मेषु लक्ष्येषु तेषामेवातिशयः फलमिति द्वात्रिंशत्पिण्डा । न च द्वात्रिंशत्, सम्बन्धवैविध्ययोजनत्वे अनन्ता एव लक्षणाः(१) ।

एवं लक्षणामुक्त्वा तदुपाधेयमाह—तद्भूः तस्या भूमिः, तदाह वृत्तिकृत्—तदाश्रय इति । लाक्षणिकं शब्दं लक्षयताऽर्थोऽपि लक्षितप्रायः । सम्प्रति व्यञ्जके लक्षणीये तदुपाधौ व्यञ्जनायां विप्रतिपत्तिं निराचष्टे—तत्रेति । 'यस्येति'(२)—प्रयोजनवल्लक्षणावति शब्दे(३) लक्षितिर्लक्षणा गङ्गादिपदेन तदादिप्रत्यायनम् । समुपास्यते विनाऽपि प्रसिद्धिमाकाङ्क्षितनिष्पादकतयाऽऽश्रीयते । शब्दैकगम्ये शब्दबोध्यत्वायोगव्यवच्छेदवति ।

---

(१) अशीतिप्रकारा लक्षणा हि विश्वनाथेन साधिता । अनन्ता इति तु विभागकल्पनस्य परमार्थतोऽसम्भाव्यत्वसूचनम् । तत्र बीजं सम्बन्धवैविध्यप्रयोजनत्वमिति साधूपदर्शितं टीकाकृता ।

(२) यस्येतीत्यंश आदर्शपुस्तकेऽविद्यमानोऽपि बोधसौकर्यायानन्तरकारिकाऽवतरणिकां साधयितुं पूरितः ।

(३) रूढिलक्षणाया अनवकाशात् ।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतिपत्तिरपि(१) तु तस्मादेव शब्दात्। न चात्र व्यञ्जनादृतेऽन्यो व्यापारः। तथा हि–

(२४) नाभिधा समयाभावात्—

'गङ्गायां घोष' इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः।

(२५)—हेत्वभावान्न लक्षणा ॥ १५ ॥

मुख्यार्थबाधादित्रयं हेतुः। तथा च—

---

गङ्गादिपदानुपनीते हि तटादौ नैवंविधातिशयप्रतिलम्भ इत्यन्वयव्यतिरेकाभ्यां तस्मादेवेयं बुद्धिरिति निश्चीयते। न तत्प्रतिपत्तिमन्तरेण तद्बोधने शब्दः पर्याप्त इति तन्मात्रं भावसिद्धम्(२)। वक्ष्यमाणरीत्या तस्या अभिधाऽऽदिरूपतानिरासेनास्माभिर्ध्वनिप्रस्थानस्थितैर्व्यञ्जनानाम्ना व्यवहारः कृतः, तदाह—व्यञ्जनान्नापरा क्रियेति। तत्प्रतिपत्तिः प्रयोजनप्रतिपत्तिः। शेषा तु वृत्तिः कारिकाव्याख्यया व्याख्याता।

तत्र तटादौ, गङ्गादौ तु पावनत्वादीनां भवतु कथञ्चिदभिधेयोपनयनमिति भावः। त्रयमिति–मुख्यार्थबाधस्तत्सम्बन्धो रूढिप्रयोजनयोरेकम्। तत्र लक्ष्यभावः स्फुटः, प्रयोजनाभावस्तूत्तरत्र

---

(१) 'प्रतीतिरपी'ति क्वचित् पाठः।

(२) भावसिद्धं स्वभावसिद्धमित्यर्थः।

(२६) लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, यदि तद्वत् तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः, नाप्यत्र बाधः, न च

---

प्रपञ्चनीयः। 'तथा चे'ति 'लक्ष्य'मित्यादि कारिकाऽवताराय क्वचित् (१) पाठः । बाधोऽन्वयानुपपत्तिः। फलेन पावनत्वादिना नास्ति तटादेर्योगो वास्तवः । ते हि गङ्गादिगता एव प्रतीयन्ते तत्तादात्म्यप्रत्ययबलात्, न तु स्वगता,स्तेषां स्वपदप्रतिपादनायोग्यत्वात् । प्रयोजनं प्रकृतादन्यत्र । स्खलद्गतिरिति–प्रकारान्तरेण प्रतिपादयितुमशक्येष्वेवार्थेषु शब्दस्य स्खलद्गतित्वादपर्याप्तशक्त्यन्तरत्वात् प्रतीत्यपर्यवसानमूलाया लक्षणाया उज्जीवनमङ्गीक्रियते। पावनत्वादौ तु स्वतोऽविनाभाविनि प्रभवत्येव शक्त्यन्तरम् । अभिधया हि स्रोतोविशेषस्तन्मिलित एव प्रतीयते । यद्येवं, कृतं व्यञ्जनाप्रत्याशयेति चेत्, न । तटगततया प्रतीतेरपूर्वत्वात् । किमायातं तर्हि लक्षणापक्षस्येति चेत्, सत्यं,

---

(१) श्रीधरकृते काव्यप्रकाशविवेकेऽन्यत्र चास्योपोद्बलकस्य स्वीकारः। इत्थञ्चैतद्व्याख्यायते 'यथा मुख्यार्थबाधाऽऽदित्रयं न निमित्ततया सम्भाव्यते तथेदमुच्यत इत्यर्थः' । रुचकमाणिक्यचन्द्रादिभिरतिप्राचीनैष्टीकाकृद्भिर्व्याख्यातत्वादयमंशो मूलग्रन्थान्तर्भूतः प्रक्षिप्तो वेति वक्तुं न सुशकः ।

गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः, नापि प्रयोजने लक्ष्यं किञ्चित् प्रयोजनम्, नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ।

---

यत्र सर्वथैवाभिधानं प्रसरति तत्रैव तटादौ लक्षणाऽङ्गीकृतिः । पावनताऽऽदेस्तु विशिष्टाकारस्य वाच्यत्वेऽपि स्वरूपमात्रेण सम्भवति कथञ्चिदभिधाया विषयत्वमिति ग्रन्थसङ्गतिः । तदिदमुक्तं वृत्तौ 'नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थ' इति । 'प्रतिपादयितुं समर्थ'(१)इति यदा वृत्तिपाठस्तदैतस्मिन्लक्ष्ये प्रतीते न शब्दः स्खलद्गतिरन्वययोग्यतया निराकाङ्क्षः सन्नत्रैव विश्रान्तः कथं प्रयोजनं लक्षयितुं समर्थः स्यादिति कारिकाऽर्थः । 'प्रतिपादयितु'मिति वृत्तौ च लक्षणयेति शेषः । न च 'नाप्यत्र बाध' इति कारिकाऽवयवेनैकार्थता । अन्वयानुपपत्तिर्बाधोऽन्वयप्रतिपत्त्या निराकाङ्क्षत्वं स्खलद्गतित्वमिति वचोभङ्गिभेदात् । वाच्याभिप्रायेण मुख्यार्थबाध इति ब्रुवाणः श्रीधरसान्धिविग्रहिकः(२) सन्धिविग्रहव्यवसायव्यग्रः सम्यगबुद्ध-

---

(१) प्रश्नपरो 'नापी'ति शब्दपूर्वो द्वितीयपाठस्तु न साधीयानिति स्फुटमेव । पूर्वत्र बाधादिकमनपेक्ष्येति द्वितीयपाठे ।

(२) एवं श्रीधरसान्धिविग्रहिक आपाततो रुचकमनुसृत्य व्याचचक्षे— 'तथाहि तटस्य लक्ष्यस्य बाधे प्रयोजनं लक्ष्यं स्यात् । न च तदभिप्रायेण मुख्यार्थबाधो घटते, न हि तटादिर्मुख्योऽर्थो, लक्षणीयत्वात् ।......... वाच्यार्थाभिप्रायेण मुख्यार्थबाधो लक्ष्याभिप्रायेण स्खलद्गतित्वमिति महाननयोर्भेदः' । वृत्तिग्रन्थस्तु चण्डीदासव्याख्यानानुकूल

(२७) एवमप्यनवस्था स्याद्या मूलक्षतिकारिणी(१) ।

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण, तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था भवेत् ।

---

वान् । नेदं मुख्यं नाप्यत्र लक्ष्ये बाध इति हि लाक्षणिकार्थविषय एव कारिकाभाग इत्यलं पलालचर्वणेन । अन्वयबाधो(२) घोषान्वयप्रतीतिशून्यः । तद्वत्स्रोतसीव । तच्चदा । गङ्गाशब्दार्थस्य लक्षणया लक्षणीयैस्तत्तयाऽभिमतैः । लक्ष्ये इति 'एतस्मिन्नि'ति कारिकाप्रतीकपूरणम् ।

प्रयोजने लक्ष्ये फलं नास्तीत्युक्त्वा सम्प्रति दुर्दूरूढान्प्रति युक्त्या फलाभावमुपपादयति— एवमपीति —प्रयोजनान्तरबोधनाय प्रयोजने लक्ष्य इत्यर्थः । नन्वनवस्थाऽपि क्वचिद्बीजाङ्कुरवत्प्रवाहादौ न दोषमावहतीत्याह — या मूलक्षति-

---

इव प्रतिभाति । ०प्रदीपव्याख्यानमतेस्स्यष्टयति—'यथा गङ्गाशब्दस्य स्रोतो(?) मुख्योऽर्थः, तत्र च बाधः, तीरे च तत्सम्बन्धः, तीरस्य च लक्षणयोपस्थापनम्.........तद्वद्यदि तटमपि मुख्यं स्यात्, तत्र च बाधो भवेत्प्रयोजनं च गङ्गादिगतपावनत्वादिविशेषस्य तदेन सम्बन्धः स्यात् तदा गङ्गाशब्दः प्रयोजनं लक्षयति । न चैतदेकमप्यत्रेत्यर्थ' इति ।

( १ ) 'क्षयकारिणी'ति क्वचित् पाठः ।

( २ ) स्रोतसि सबाधो घोषान्वयप्रतीतिशून्य इति तु स्यात् । असंगतप्राय इवोपरिदर्शितः पाठः प्रतिभाति ।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते, गङ्गाया-स्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च(१) प्रयोजन-

कारिणीति । लक्षणायां प्रयोजनं प्रतीयमानमेवाङ्गीकार्यं, तस्य तन्मात्रप्रमाणकत्वात् । ततश्चानन्तप्रयोजनधाराप्रतीतावेव पुरुषायुषः परिक्षयः स्यादिति क्वचन निष्प्रयोजना प्रयोजनप्रतीतिरुपास्या, तस्मात्प्रमाणापुरस्कारकल्पितस्य भवदङ्गीकृतस्यैव प्रयोजनस्यैवंविधानर्थमूलस्य परित्यागो न्याय्य इति भावः । प्रयोजनान्तरेण प्रयोजनान्तरमुद्दिश्य । अप्रतीतिरविश्वासः । नन्विति—तादात्म्येन तटप्रत्ययस्तावल्लक्षणासाध्यः । गङ्गातादात्म्यस्य च पावनत्वादिविशेषोदरम्भरित्वं दैवसिद्धमेवेति किमवशिष्यते यत्कृते वृत्त्यन्तराङ्गीकार इति शङ्काऽर्थः, परिहारार्थस्तु गङ्गातादात्म्यप्रतीतेः(२) कार्य एव तटे पावनत्वशैत्यादिप्रत्ययो, न तु तदर्थे । विशिष्टज्ञानं हि विशेषणविशेष्यज्ञानपूर्वकमेव भवति, न चात्रैवं सम्भवति, विशेषणस्य शैत्यादेः सरित्लीनतयाऽभिधया स्मारितत्वात् , विशेष्यस्य तटस्य च सर्वथा पूर्वमनुपनीतत्वात् । तर्हि कथमभिधयाऽपि शैत्यादिविशिष्टनिम्नगाप्रत्यायनमिति चेत् , यथासङ्केतितस्यैव स्मृत्युपनीतत्वादिति केचित् । वस्तुतस्तु सरिद्भेद एव सङ्केतस्मृत्योर्विषयो ग्राह्यो न शैत्यादिः । न हि धर्मिणि सङ्केत्ये संलग्नः सर्व एव गुणादिः सङ्केत्यः ।

---

(१) 'प्रतिपत्तिश्चे'ति क्वचित् पाठः ।

(२) 'प्रतीते कार्य'...इत्यादर्शपुस्तके पाठः ।

मिति विशिष्टे लक्षणा, तत्किं व्यञ्जनयेत्याह—

मा भूच्छैत्यादिर्गङ्गापदसङ्केत्यः । तस्माद्धेतुफलयोस्तटफलप्रतीत्योर्भिन्नकालत्वेनाभिन्नव्यापारविषयत्वमसमीचीनमेवेति सर्वथा दुर्वारो लक्षणाऽङ्गीकारः । तदिदं वक्ष्यति—'विशेषाः स्युस्तु लक्षित' इति। यथाश्रुतं तु ज्ञानस्य विषयव्यतिरिक्तं फलमात्रं विवक्षितं, ज्ञेयगतं वा फलम् ? आद्येऽप्यस्ति गोस्वामिगतसन्तोषादिः। अस्तु तर्हि द्वितीयः(१) । तथाहि उपेक्षाबुद्धिव्यतिरिक्तेन ज्ञानेन निर्विकल्पकेन सविकल्पकं जन्यते, तेन च हेयोपादेयताबुद्धिः । तथा च स्वविषये तटादौ हानमुपादानं वेति चेन्न, प्रकृत एव व्यभिचारात्, तत्पक्षेऽपि हि शैत्यादिप्रतीत्या तटादिगतं न किञ्चिज्जन्यते,ऽपि तु गङ्गादिगत एव परितोषादिरित्यसङ्गतिः । यत्तु श्रीधरसान्धिविग्रहिकः परिहारद्वयं लिखितवान् तदशिक्षितव्यामोहनमात्रम् । तथाहि एकः—प्रयोजनार्थं तावल्लक्षणा समुज्जीव्यते, सा च पदव्यापारः, स च विषयानिष्ठः, तन्मुखेनैव स्वरूपप्रतिलम्भात् । ततश्च लक्षणा न । एवञ्च त्रिषयगर्भा-

(१) टीकाग्रन्थोऽत्र त्रुटित इव प्रतिभाति । मुद्रिते प्रदीपे चण्डीदासग्रन्थ एष एवमुद्धृतः—'ज्ञानस्य विषयातिरिक्तं फलमात्रं वा विवक्षितं, ज्ञेयगतं वा ? आद्ये प्रकृतेऽप्यस्ति गोस्वामिगतप्रवृत्तिः । अन्त्ये प्रयोजनज्ञान एव व्यभिचारः । तेन हि गोस्वामिगतसन्तोषमात्रं जन्यते । न तु तद्गतं किञ्चिदिति । तस्माद्धेतुफलयोस्तटप्रतीतिफलप्रतीत्योर्भिन्नकालत्वेनाभिन्नव्यापारविषयत्वमसमीचीनमेवेति व्यञ्जनासिद्धिरित्यत्र तात्पर्य'मिति ।

कारादस्याः प्रयोजनमित्युक्ते यादृशी सा तादृश्या एवाखण्डायाः प्रयोजनश्चोद्यं, ततश्च प्रयोजनविषययोः पार्थक्यमर्थादि-व्यतिरिक्तविषयस्योक्तरीत्या वृत्तिशरीरान्तर्लीनत्वादिति विषय-स्य प्रयोजनं, न तु प्रयोजनं विषयः—इतिस्वरूपः(१)। अत्र किं लक्षणात्वं शब्दव्यापारतद्विषययोर्व्यासज्य वर्तते, व्यापार-मात्रे वा, वस्तुतो विषयवति वा ? नाद्यः, सर्वत्र बाह्यत्वात्। द्वितीये तु प्रयोजनस्य विषयत्वे का क्षतिः, गर्भीकारस्यात्राज्ञात्रत्वात्। अपरस्तु—अत्रान्वयानुपपत्तिमूलाऽन्वयपर्यवसायिनी च लक्षणा। तया च यावद्गङ्गाविन्याऽन्वयो न प्रतीयते तावदेव प्रत्याय्यं, न त्वधिकं तत्स्वरूपमात्रं, तदङ्गं न शैत्यादि इत्यलक्षणीयत्वं तस्य।—अत्रापि यदि तस्या अधिकप्रसारप्रत्यादेशो न प्रत्यासीदति तदा तत्पर्यन्तप्रसारे न विरोधः। नहि धर्मप्रशमार्थमुपात्तः श्रीखण्डपदलोपो न शीतयति सर्वाङ्गम्, अधिकप्रसारप्रत्यादेश-श्चास्माभिरुक्त इति स एव मुख्यः परिहारः। यदुक्तं ध्वनि-ध्वंसे(२) यदेव साध्यं तदेव प्रयोजन, मन्यथा सर्वस्य सर्व-

---

(१) द्वितीयवाक्यपाठस्त्वित्थमुपलभ्यते श्रीधरकृतकाव्य-प्रकाशविवेकस्यास्मद्दृष्टे पुस्तके। 'एवञ्च लक्षणायाः प्रयोजनमिति भणितौ यादृशी लक्षणा तादृशं प्रयोजन वाच्यं, प्रत्येयविषय-निष्ठशब्दव्यापाररूपा च लक्षणा, तस्या गर्भीकृतविषयायाः प्रयोजने विचार्ये कोऽवसरः प्रयोजनस्य, लक्षणाविषयत्वेन गर्भीकृत-भङ्ग्या हि विषयस्य प्रयोजनं, न तु प्रयोजनं विषयः........" इति। सर्वमेतद्रुचककृतसङ्केतानुवादीति मन्तव्यम।

(२) विस्तरतोऽस्य मतस्योद्धारः श्रीधरेण, तत्कृतप्रकृतविमर्शे

(२८) प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥

कुत इत्याह—

(२९) ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।

प्रत्यक्षादेर्नीलादिर्विषयः, फलं च (१)प्रकटता संवित्तिर्वा ।

(३०) विशिष्टे लक्षणा नैवम्—

व्याख्यातम् ।

---

प्रयोजनताऽऽपत्तेः । ततश्च यद्यत्प्रयोजनं तत्तत्साध्यं, यथा पाकस्यान्ननिष्पत्तिरिति लक्षणोद्देश्या वृत्त्यन्तरबोध्या च । द्वितीये तु दृष्टान्त एव बाधः पाकस्य दहनसंयोगस्य विषयस्तण्डुलद्रोण एव । अन्ननिष्पत्तिस्तत्कार्यमेव ।

'प्रयोजनेन सहितं लक्षणीयं न युज्यते'—एकयैव लक्षणाऽऽख्यया वृत्त्या प्रयोजनाधारस्य तटादेः प्रयोजनस्य शैत्यादेश्च बोधनाङ्गीकारो न युक्तिमारोहतीत्यर्थः । ज्ञानस्य वस्तुपरिच्छेदमात्रपर्यवसाने शैत्यादिविषयकोपेक्षाबुद्धिव्यतिरिक्तस्य(२) । हीति यस्मादेवं तस्मादत्राप्येवं युक्तमिति भावः । प्रकटता ज्ञानज्ञेयत्वनियामकः कश्चनातिशयो ज्ञेये जायते । भट्टदिशा सम्यग्हेयोपादेयतया ज्ञानं संवित्तिः ।

---

भट्टनायकमतखण्डनप्रसङ्गे ध्वन्यालोकलोचने श्रीमद्भिरभिनवगुप्तपादैश्च साधित इति तत्रैवालोकनीयमनुसन्धित्सुभिः ।

(१) 'फलं तु' इति वा पाठः ।

(२) एवमादर्शपुस्तके पाठः । 'गङ्गायां घोष' इति प्रकृतपूरणम् ।

(३१)—विशेषाः स्युस्तु लक्षिते ॥ १८ ॥

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधा-तात्पर्य-लक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जन-ध्वनन-द्योतनादिशब्दवाच्यमवश्यमेषितव्यम् । एवं लक्षणामूलं व्यञ्जकत्वमुक्तम् । अभिधामूलं त्वाह —

---

ज्ञानग्राहकं ज्ञानमनुव्यवसायाख्यमित्येके(१) । लक्षिते लक्षणाविषये तटादौ घोषाद्यधिकरणतया प्रतीते । विशेषाः शैत्य-त्यपावनत्वादयो घोषस्वास्थस्यानुगुण्येन गोस्वामिहृदयङ्गमाः स्युः प्रत्याय्या इति शेषः । तात्पर्यस्योपात्तपदार्थससंर्गमात्रनै-यत्येन प्रयोजनाबोधकतया स्पृष्टत्वात्तदप्युपसंहारे योजयति । अभिधाऽऽदिभ्योऽन्तरेण भिन्नेन व्यापारेण गम्या इति सूत्रय-र्थः । ध्वननादीत्यादिशब्देन प्रत्यायनप्रकाशनादिभाषाया अव-बोधः । न च स्मृतिव्यापारोऽननुभूतचरत्वात्, नाप्यर्थापत्ति,-रनुमानं वा, अनुपपत्तिव्याप्तिप्रतिसन्धानाभावात्(२) । तदाह, तच्च व्यञ्जनादिपदवाच्यमवश्यं वेदितव्यमि(३)ति । एवमित्या-दिः प्रकरणसङ्गतिः । लक्षणामूलं लक्षणोज्जीवितम् ।

एवमभिधामूलमित्यादि—इह तत्त्वतो गवादिशब्दानामेकै-

---

(१) एकत्र पूर्वमीमांसकमतानुमतः सिद्धान्तोऽन्यत्र तार्किक-कृततर्काविष्कारः।

(२) सर्वमेतत्सविस्तरमालोचितं पञ्चमोल्लासे वृत्तिग्रन्थे तदुप-जीविते साहित्यदर्पणादौ च ।

(३) 'एषितव्य'मिति तु मूले सार्वत्रिकः पाठः।

वाभिधाशक्तिः सुरभिक्षितिवागादिविषयेत्येके, तन्न, एकस्य शब्दव्यापारस्य गुणप्राधान्यहानानेकगोचरत्वा-दर्शनात् । तस्मादेकस्य वर्णसमूहात्मनः पदस्यार्थभेदेन भिन्ना एवाभिधानशक्तयः । तासाञ्च प्रकरणादिना शेषप्रसारणं निषिध्योज्जीवितायां कस्याञ्चिदर्थान्तरस्यार्थे प्रतीतिर्यत्र जायते तत्रार्थान्तरे तावदस्ति कश्चन शब्दव्यापारः । न चासौ सैव प्राचीनाऽभिधा, बाधितत्वा,द्विषयान्तरत्वाच्च । न च लक्षणा,ऽन्वयबाधामूलत्वात्, नापि तात्पर्यम्, अभिहितलक्षित-संसर्गमात्रनियतत्वात् । ततश्च द्वितीयमभिधानं पूर्वरुद्धमपि लब्ध-सहायान्तरं पुनः प्रसृतं, तच्च स्वज्ञानावान्तराङ्गयावान्निष्ठ-व्यापारतया स्वावसरनिरुद्धस्यानवसरप्रसाराद्वा विलक्षणनाम्ना व्यञ्जकत्वं कैश्चि(किञ्चि)दुच्यते, तस्याश्चोद्बोधहेतुः शब्दोऽर्थो वा । तत्राद्यो यथा 'भ्रमि'त्यादौ(१) । (२)तत्र हि भुजगरूपेण बला-द्विषशब्दस्य गरलेऽपि शक्तिराविष्क्रियते । द्वितीयस्तु 'भद्रात्मन'(३) इत्यादौ । तत्र नास्ति कश्चिन्निर्दिष्टस्तद्बोधहेतुः । यत्र तु प्रकरणा-दिनियामकं नास्ति तत्रानेकार्थविषयः सन्देह एव 'येन ध्वस्ते'-(४)

---

(१) पञ्चमोल्लासस्य 'भ्रमिमरतिमतस्येका'दुदाहरणे ।

(२) एतदुध्वन्यालोकलोचनसरणिमनुसरद्भिः ( लोचने ९७ पृः ) ग्रन्थकृद्भिः पञ्चमोल्लासे वृत्तिग्रन्थे 'अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृदि'ति दर्शितम् ।

(३) अस्यैवोल्लासस्यान्तिमे श्लोके ।

(४) सप्तमोल्लासे 'येन ध्वस्तमनोभवेने'त्यादौ ।

(३२) अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥ १९॥

त्यादाविव 'द्वयेषामपि मेदिनीभृता'(१)मित्यादाविवोभय-योग्यत्वादुभयाभिधानं वा। 'भ्रमि'मित्यादौ पदान्तरसाचिव्या-त्पुनरुज्जीवत्यभिधानं, न तु तथा 'येने'त्यादौ, तदभावात्। तर्हि कथमर्थावगम इति चेत्, नास्त्येवेति वदन्तोऽनुभूत्यैव भगवत्या गलहस्तिताः, दुर्व्याख्यातृत्वव्यपदेशपरम्परयेति जल्पन्तस्तूभय-त्र प्रतीत्यविशेषाद्व्याख्याविशेषविनिगमनाभावान्निरस्ताः। व्यञ्जनाख्यं व्यापारान्तरमेवेति पश्यन्तस्तद्वदेव 'भ्रमि'मित्यादावपि पुण्याहलग्ने स्वस्ति वाचयितव्याः। तत्रास्त्युज्जीवकं शब्दा-न्तरमिति चेत्, भ्रातः! क्व पुनर्मृताया उज्जीवनं, कथन्तर्हि लक्षणायाः पूर्वापर्यवसितत्वात् पर्याजीवनमिति चेत्, तत्रापि त-देव तात्पर्यमुज्जीवतीति कस्ते परमाविश्वस्तः कथितवान्? अस्तु वा तत्र तथैवमभिधायाः पुनरेकत्र प्रयोगेणोज्जीवनाविर्भावः क्वचनापि दृष्टचरः, कथन्तर्हि द्वितीयाभिधाविषयेष्वेवंविधस्थलेषु व्यञ्जनं प्रसरतीति चेत्, सत्यं, यत्र तत्प्रसरोऽतिप्रसङ्गीत्या तामभिधां सम्बन्धभूतामाश्रित्य व्यञ्जनमङ्गीक्रियत इत्येकं दर्श-नम्, अन्यत्त्वनेकार्थत्वमिति रीत्याऽर्थभेदेन शब्दभेद एव। ऐक्य-भ्रमस्तु साजात्यमात्रकृतः। कथन्तर्हि शब्दशक्तिमूलध्वनि-गुणीभूतव्यङ्ग्ययोर्द्वितीयार्थप्रतीतिः। आवृत्त्येति चेन्न, सकृदेवो-

(१) शिशुपालवधे (१२।१३)।

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

---

दाहरणात्, शब्दस्वरूपविपर्यासे निमित्ताभावाच्च । प्रतिप्रसूत्या शब्दान्तरकल्पनमिति चेत्, न, श्रूयमाणस्य तस्याभावात्, अन्यवाचकादन्यवाचकोत्पत्तिनैयत्या-(१)भावदर्शनाच्च । तस्मात्तस्यैव शब्दस्य प्रथमप्रतीतार्थवाचकस्य धर्मिकल्पनातो धर्मकल्पनं वरमिति नीत्या द्वितीयेऽर्थेऽपरा शक्तिरङ्गीक्रियते । सा च श्रीमदानन्दवर्धनाचार्यदर्शने व्यञ्जनमित्युच्यते(२) । असम्बन्धात् कथं तत्र शक्तिरिति चेन्न, शक्तेरेव तत्त्वात् । तत्रापि नियामकं मृग्यमिति चेत् , सत्यं मृग्यं, किन्तु स्वरूपमेव वाच्यवाचकयोरिव तद्भावे नियामकं, तद्विरहे तु 'येन ध्वस्ते'त्यादौ 'श्वेतो धावती'त्यादाविव शब्दस्वरूपानिश्चयादर्थेऽप्यनिश्चयः । कथं पुनरेवंविधानां काव्यानां न दुष्टत्वं, स्वरूपमाहात्म्येन रसस्यापकर्षविरहादित्येव वरम्(३) ।

अत्राद्येऽनेकार्थस्यानेकाभिधेयस्य द्वितीये साजात्यादन्यवाचकैक्यभ्रमभाजो वाचकत्वे नियन्त्रिते एकत्राभिधाऽन्तरनियमान्निश्चितप्रसरेऽन्यत्र वाचकस्वरूपानिश्चयान्निश्चितस्वरूपे,

---

(१) 'उत्पत्त्यनैयत्याभावे'ति 'क' पाठः ।

(२) 'सत्काव्यतत्त्वविषयं स्फुरितप्रसुप्तकल्पं मनःसु परिपक्वधियां यदासीत् । तद्व्याकरोत्सहृदयोदयलाभहेतुरानन्दवर्धन इति प्रथिताभिधानः ॥' इति तत्प्रतिज्ञाप्रसिद्ध्यनुसाराच्छ्रीमदानन्दवर्धनाचार्यदर्शन इत्युक्तम् ।

(३) विरहादित्यपरं 'क' पाठः । पाठद्वयमपि न सम्यक् ।

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥"इत्युक्तादिशा
'सशङ्खचक्रो हरिः' 'अशङ्खचक्रो हरि'रित्यच्युते(१)।

एकाभिधावादे तु नियन्त्रिते एकद्रव्यस्थापिते। अर्थान्तरव्यक्तृयता त्वत्र स्फुटा। एवं विरततया तस्या नियामकविरहस्थले तु निश्चयाभावाद्गौणायमानत्वम्। द्वयोरर्थयोः संयोगाद्यैर्नियन्त्रित इति सम्बन्धः। संयोगसाहचर्यविरोधिताऽत्यन्तप्रसिद्धा एव व्यवच्छेदकृतः। विप्रयोगोऽपि प्रसिद्धयोगसमानाधिकरणो निमित्तविशेषात्कदाचिद्विरहः। अर्थः फलम्। प्रकरणं बुद्धिसान्निध्यम्। लिङ्गं परपक्षव्यावृत्तो धर्मः। अन्यस्याव्यभिचारिण इति शेषः। सन्निधिः सामानाधिकरण्यम्। सामर्थ्यं तत्करणानियमः। औचिती योग्यतातिरस्कारविरहः। देशकालौ तद्विशेषौ। व्यक्तिस्तद्गतपुंस्त्वादिः। स्वरा वैदिका उदात्तादयः, लौकिकाश्च काकुविशेषाः। अनवच्छेदेऽनिर्णये। विशेषस्मृतिरूपं योग्याभिधानम्(२)। दिशा मार्गेण।

अशङ्खचक्र इति प्रतिषेधस्य प्रसक्तपूर्वकतया सर्वथा तद्विरम्य युक्तत्वात्तद्व्यवच्छेदकता। अच्युत इत्यादौ हरिरित्यादिपदं सर्वथा नियमितमिति शेषः। रामलक्ष्मणावित्युभयाप्रसिद्धौ, अन्यथा संयोगोदाहृतित्वप्रसक्तादिति न

(१) 'तत्र हेतव' इत्यंश आदर्शपुस्तके प्रमादपतितः स्यात्।

(२) 'उच्यत' इत्यमनोज्ञः प्रकरणासमञ्जससम्बन्धश्च पाठः कुत्रचिन्मुद्रितपुस्तक उपलभ्यते।

'रामलक्ष्मणा'विति दाशरथौ । 'रामार्जुनगतिस्तयो' रिति भार्गवकार्त्तवीर्य्ययोः । 'स्थाणुम्भज भवच्छिदे' इति हरे । 'सर्वं जानाति देव'इति युष्मदर्थे । 'कुपितो मकरध्वज'इति कामे । 'देवस्य पुराराते'रिति शम्भौ ।

---

युक्तमुक्तम् । उभयत्राासिद्धौ न संयोगो नियामक इति प्रमाणाभावात् संयोगसाहचर्य्ये तु भिन्न एव तयोः कयो- श्चित्प्रकृतयोः—इत्थञ्च वध्यघातकोदाहृतिः । सहानवस्थाने तु छायाऽऽतपाविति । अत्रातपसान्निध्याच्छायापदं दिनकृ- च्छार्यादिव्यावर्त्तते(१) । स्थाणुपदस्य शङ्करवाचकत्वे भवच्छेदा- र्थेनान्वयो न घटते । युष्मदिति प्रकृतराजादिपरम् । काम इति कोपस्य मकराकारे ध्वजेऽसम्भावनादित्यर्थः । वसन्त इति तस्यैव तत्करणनियमात् । साम्मुख्य इति—अन्यथाऽनाथ- कातरत्राणयोग्यतातिरस्कारात् । अत्रेति षष्ठ्यर्थे । रवाविति- दिने वह्नेर्दीप्तिसङ्कोचेनासंयोगात् । वर्त्तमाननिर्देशस्य(२) तत्काल- परत्वादिति भावः । वह्नाविति नक्तं रवेरभावात् । इन्द्रेति— षष्ठीतत्पुरुषसमासेऽन्तोदात्तसूचितो दैत्यादिर्वाच्य इन्द्रस्य शम-

---

(१) वध्यघातकसहानवस्थानलक्षणावुभावेव विरोधस्य भेदौ प्रामाणिकैरङ्गीकृताविति मूलग्रन्थोपरि एष टीकाकृदुपस्कारः ।

(२) 'भाती'ति लट्प्रयोगसूचितस्येति शेषः ।

'मधुना मत्तः कोकिल' इति वसन्ते । 'पातु वो दयिता-मुख'मिति सांमुख्ये । 'भात्यत्र परमेश्वर' इति राजधानीरूपादेशाद्राजनि । 'चित्रभानुर्विभाती'ति दिने रवौ, रात्रौ वह्नौ । 'मित्रं भाती'ति सुहृदि । 'मित्रो

यिता शातयिता वेति । स्वर उदात्तादिः काव्ये विशेषप्रतीति-कृन्न भवति, काकुविशेषस्तु भवत्येवेति भावः । वेद एवेति(१) वदता बहुलप्रयोगो नास्त्युदात्तादेः, क्वाचित्कस्तु विद्यत एवेत्य-भिप्रेतम्—यदाह पाठ्यगणे मुनिः(२)–'हास्यशृङ्गारयोः स्वरितो-

(१) वेद एवेत्येके टीकाकृतः पठन्ति । चण्डीदासानुसारिणो विश्वनाथस्याप्यत्र स एव पाठोऽभिमतः । 'काव्यमार्गे स्वरो न गण्यत' इत्युत्तरग्रन्थस्वारस्यादिति तदभिप्रायमूलत्वप्रकटनम् । श्रीधरचण्डी-दासगोविन्दठक्कुरप्रभृतयस्तु नैवं मन्यन्ते । यत्तु स्वरशब्देनोदात्ता-दिकं विवक्षितमिति प्रदीपग्रन्थे मतान्तरोपन्यसनं तदपि भरतादि-मतानालोचनविजृम्भितत्वादनादेयम् । चण्डीदासव्याख्यानमेतदु-द्दिष्टमेवं 'इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपे-णे'ति सन्दर्भे साहित्यदर्पणस्य द्वितीयपरिच्छेदस्थेऽभिधामूलव्य-ञ्जनोद्देशप्रस्तावे, न तु रुचकमतं यथा केचिदधुनातनास्तर्कयन्ति ( P. V. Kane. *Sahityadarapana* chap. II. Notes ), रुत्रककृतव्याख्याने मतस्यास्यादर्शनाच्चण्डीदासस्यैव पूर्वतरसगोत्र-त्वेन मान्यताव्यपदेशसामर्थ्यात् । चण्डीदासानुजीविनो दर्पणकृत इति तु प्रतिपदं प्रकटम् ।

(२) नाट्यशास्त्रे २७शाध्याये (काव्यमाला सं० १८७ पृ०–मुद्रित-पुस्तकपाठस्तु किंचिद्भिन्नः। काशीमुद्रितपुस्तकपाठोऽपि न सम्यक् तदनुगामी ।

भाती'ति रवौ । इन्द्रशत्रुरित्यादौ वेद एव न काव्ये स्वरो विशेषप्रतीतिकृत् । आदिग्रहणात्—

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥ ११ ॥

इत्यादावभिनयादयः । इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत्क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा, नियमनात्तस्याः । न च लक्षणा, मुख्यार्थबाधाद्यभावात्—अपि त्वञ्जनं व्यञ्जनमेव व्यापारः । यथा—

---

दात्तं, वीररौद्राद्भुतेषूदात्तस्वरितं, करुणबीभत्सभयानकेष्वनुदात्तस्वरितकम्पितमुपपादये'दिति रसविशेषप्रतीतावुदात्ताद्युपयोगः । एद्दहेति—परिमाणे द्दह-प्रत्ययः । अक्ष्णोः पत्ररूपत्वेन पद्मादिपत्रवत्किञ्चित्कुटिलविस्तृतदीर्घत्वमभिप्रेतम् । अभिमुखमिव नीयतेऽर्थोऽनेनेत्यभिनय आङ्गिकादिः । अत्र सन्निहितविततांगुलीकरपल्लवद्वययोस्तिर्यक्प्रसारेण, स्तनयोः सङ्कुचिताग्रोत्तानितकरेण नयनयोस्तिर्यग्वलनेन ऊर्द्ध्वतर्जन्या सम्मुखीनविरहिणीदेहदौर्बल्यादौ प्रसारिताङ्गुलीपर्वगणनया, दिवससंख्यायां विवक्षितविशेषः सर्वनाम्नः प्रतिपाद्यं निश्चीयते । आदिना 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षय'(१)मित्यादावात्मनि निर्देशादयः । निवारित इति पूर्वमनुसृत्य व्याख्येयम् ।

---

(१) कुमारसम्भवे (२।५५)

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य ।
यस्यानुपप्लवगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत ॥ १२ ॥

(३३) तद्युक्तो व्यञ्जकः शब्दः—

तद्युक्तो व्यञ्जनयुक्तः ।

(३४)—यत्सोऽर्थान्तरयुक् तथा ।

---

भद्रात्मा शोभनो गजजातिश्च । अधिरोह आरोहणमवकलनश्च । विशालता दैर्घ्यं बाहुल्यप्रसिद्धी च । वंशो वेणुः, पृष्ठवंशो दण्डो वाऽन्ववायश्च । शिलीमुखौ बाणभ्रमरौ । संग्रहः संसर्गोऽभ्यासदार्ढ्यं-श्च । उपप्लुतिरसौन्दर्यं गमने,ऽव्याहतप्रसरता नृपपक्षे । पर-वारणः शत्रुदर्पदलनः, प्रशस्तहस्ती [ च । दानं ] शास्त्रविधिना द्विजेभ्यः स्वधनार्पणं, गजमदश्च । करो हस्तः शुण्डारश्च । अत्र प्रकरणबलाद्राजानुगुणा एवार्था वाच्याः, गजानुगुणास्तूक्त-रीत्या व्यङ्ग्या एव । प्रतीते चार्थद्वये सादृश्यसम्भवेनोपमानो-पमेयभावः प्रतीयते । प्राधान्येन व्यञ्जनान्तरमहिम्नेत्युपमाध्व-निरयं, शब्दशक्तेरुद्भटतया तद्व्यपदेशो न्याय्यः ।

एवं व्यञ्जनामुक्त्वा तदुपाधेयं लक्षयति—तदिति । व्यञ्जकोऽर्थः किमिति न लक्षित इत्याह—यदिति । सोऽनेका-र्थः । व्यङ्ग्यापेक्षयाऽर्थान्तरं वाच्यम् । तत्र शब्दे । सह-कारितयेति—अलङ्कारस्तावदुभयगततया तत्प्रतीतिप्रत्याय्यः ।

अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥१९॥

तथेति व्यञ्जकः ।

इति श्रीकाव्यप्रकाशे शब्दनिर्णयो नाम

द्वितीय उल्लासः ।

---

व्यङ्ग्यार्थस्वरूपमात्रप्रतीतेरपि वाच्यं प्रत्ययोत्तरकालनैयत्येना- प्रतिक्षेपात्(१) कार्यता, केवलं शब्दशक्तिरुद्भटाऽर्थशक्तिस्तु तामेवानुप्राणयतीति नार्थशक्तिमूलव्यवहारः । एतेन स्वलक्षणस्य व्यञ्जकत्वेनोपाधेः साम्येन शब्दलक्षणेनैवार्थो लक्षितप्राय इति न पृथग्लक्षणमिति सूचितम् ।

इति काव्यप्रकाशदीपिकायां द्वितीय उल्लासः ॥

---

(१) प्रतिक्षेपो व्यभिचारः । नैयत्येन प्रतिक्षेप्यात 'क' पाठः ।

# तृतीय उल्लासः ।

(३५) अर्थाः प्रोक्ताः पुरा तेषाम्—

अर्था वाच्य-लक्ष्य-व्यङ्ग्याः । तेषां वाचक-लाक्षणिक-व्यञ्जकानाम् ।

(३६) अर्थ-(१)व्यञ्जकतोच्यते ।

कीदृशीत्याह—

(३७) वक्तृबोद्धव्यकाकूना वाक्यवाच्यान्यसन्निधेः॥२१॥

एतावता प्रबन्धेन शब्दस्य व्यञ्जनाख्यमधिकं व्यापारं निर्विवादीकृत्य 'सर्वेषां प्रायश(२)' इत्यादिना सूचितमर्थस्य मुख्यतो व्यञ्जकत्वं निर्विवादीकर्त्तुमर्थान्तर(३)-मारभते । तत्र च प्रथममाश्रयानुवादः-अर्थाः प्रोक्ता इति । पुरेति 'वाच्यादयस्तदर्थाः स्युः'-(४)रित्यनेनेत्यर्थः । तदेवाह वृत्तिकृत्-वाच्येति । अर्थस्य व्यञ्जकता प्रधानभूता । उच्यते विप्रतिपत्तिनिरासायाभ्युपेयत इत्यर्थः । अतएवोत्तरकारिकाभागे वृत्तिकृता कीदृशीत्युक्तम् । उक्तैव पूर्वं व्यञ्जना, सम्प्रति कं विशेषमभिसन्धाय पुनरुच्यत इत्यर्थः । अथ व्यञ्जकतेति पाठे तेषामर्थानामिति शेषः ।

---

(१) एवं टीकाकृन्मतः पाठः । 'अथ व्यञ्जकते'ति प्रायिकः पाठः ।

(२) मूलग्रन्थे २योल्लासे ७मकारिकायाः प्रथमार्धे ।

(३) अर्थान्तरमभिधेयान्तरम् उल्लासान्तरमिति यावत् ।

(४) २योल्लासे ६ष्ठकारिकाया उत्तरार्धे ।

प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥

बोद्धव्यः प्रतिपाद्यः । काकुर्ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्य-लक्ष्य-व्यङ्ग्यात्मनः । क्रमे-

---

वाक्ये वाच्यसहितोऽन्यसन्निधिरिति मध्यपदलोपी समासः । वैशिष्ट्याद्वैलक्षण्यादिति प्रत्येकं पूर्वषष्ठ्यन्तपदेऽन्वीयते । तदनन्तरमुज्जीवित इति शेषः । प्रतिभाजुषामिति—नवनवोल्लेखबुद्धिशालिनाम्(१) । स्थूलबुद्धीनान्तु प्रायेणालक्ष्य एवायमर्थ इति भावः । अन्यार्थेति—स्वार्थे प्रत्येये पुनरभिधाऽऽद्य एव भवन्तु व्यापारा इति भावः । व्यक्तिरेवेति—वाक्यार्थपश्चाद्भावेनाभिधाऽऽदिशब्दव्यापारनिरासात् व्याप्त्यादिप्रतिसन्धानाविरहेणानुमित्यादिप्रतिक्षेपाच्चेत्यर्थः । यं प्रति प्रतिपाद्यते स प्रतिपाद्यः । ध्वनेर्विकार इति–तदुक्तं, 'भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते'(२) । सा च तत्तत्-

---

(१) एवं हि भामहादिप्राचीननिबन्धकृतां कृतं 'प्रतिभा'पदविवरणमिति १मोल्लासे दर्शितम् । एवंविधाः प्रतिभाजुषो विदग्धाः सहृदया इति वा व्यपदिश्यन्ते । इतरे तु व्याकरणकोषज्ञानमात्राश्रयाः काष्ठलोष्ट्रसमाः काव्यास्वादसुखवञ्चिता इति विदुषां दर्शनम् ।

(२) एषा प्राचीनानां विवरणपरा कारिका । भरतीयनाट्यशास्त्रादौ मूलग्रन्थेऽभिनयलक्षणे भावप्रकाशनाद्यर्वाचीननिबन्धे चास्य विस्तरेणालोचनम् । 'संयोगो विप्रयोगश्चे'त्यादिहरिकारिकाऽनुशीलनवेलायां काक्वादीनां स्वराणां काव्यसामान्योपयोगित्वं टीकाकृद्भिर्दर्शितम् ।

णोदाहरणानि—

अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअम्।
समसेअसलिलणीसासणीसहा वीसमामि खणम्॥१३॥

अत्र चौर्यरतगोपनं गम्यते।

---

सहकारिभेदात्स्वरूपभेदाच्च स्वयमाकरेषु ज्ञेया। वाच्यलक्ष्यव्यङ्ग्यात्मन इति यथायोगमुदाहृतिषु बोध्यम्। जलपूर्णकुम्भो जलकुम्भः। श्रमार्जिताभ्यां स्वेदसलिलनिःश्वासाभ्यां निःसहा निरुद्यमा। इयञ्चैकाकिन्या नदीं गताया अप्यस्याः कुतोऽयमेतादृशः श्रम इति तर्कयन्तीं प्रतिवेशिनीं प्रत्युक्तिः। अत्र जलकुम्भवहनादेवायं श्रमो, नान्यथा शङ्किष्ठा इति वक्त्रभिप्रायरूपोऽर्थः प्रकाशते। स्वभावादेव तेष्वेवाभिधाऽऽदिव्यापारेष्वव्यवच्छिन्नान्यैव तत्र प्रबला शक्तिः। न चासावनुमा। कस्य हि प्रतीतिरानुमानिकी, प्रतिवेशिन्याः, सन्निहितानां वा, काव्यर्थभावनादुपजायमानप्रकृतीनां सहृदयानां वा? तत्राद्ययोर्वार्त्तैवेति सन्तोष्टव्यं, (१)तृतीये तु न व्याप्ताद्यनुसन्दध्महे मांसचक्षुषः। किञ्चैवंविधवाक्यार्थस्य पारमार्थिकत्वानैयत्येन सन्दिग्धस्वरूपो हेतुः। भवतु तर्हि अनुमानाभास इति पण्डितम्मन्यः काञ्चन खण्डानुमितिमुपकल्प्य वाक्यार्थप्रत्यक्षादिबोधेष्वपि तत्प्रसञ्जनं शक्यमिति परासनीयः। यदेवंरूपं वाक्यं तदेवंरूपाभिप्रायकमिति सुग्रहे एव व्याप्तिपक्षधर्मत्व इति ब्रुवाणो व्याप्तिनिश्चयस्थलमन्वेषयितव्य

---

(१)-'वास्तवे'ति 'क' पाठः।

**ओणिणद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअम् ।**
**मह मन्दभाइणीए केरं सहि तुहवि अहह परिहवइ ॥१४॥**

**अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।**

---

इति पारिशेष्यादर्थस्य ध्वनिशक्तिसिद्धिः(१) । एता एव युक्तय उदाहरणान्तरेष्वपि यदृच्छया सञ्चरन्ति भगवत्यः ।

मह केरं मदीयम् । तुह त्वामित्यर्थे षष्ठी, परिभवतीत्यस्य हिंसार्थत्वात्(२) । तुह वि अहह इति पाठो न, हेति मध्ये वृत्तहानिदोषादित्येके, तन्न, गाथाभङ्गेऽपि वृत्तान्तराभङ्गात्(३) किन्तु प्रचुरपुस्तकादृष्टत्वादश्रव्यप्रायत्वाच्च अहह इति पाठानङ्गीकारः । अत्र मदीयमौन्निद्र्यादि त्वां परिभवतीत्यन्वयानुपपत्त्या मत्सदृशमौन्निद्र्यादि लक्ष्यते । तेन तदतिशय एव व्यज्यते । स चाभिव्यक्तः स्वकारणी-

---

(१) अयं हि ध्वनिध्वंसार्थं साटोपमायततां न्यायैकदेशिनां कुतार्किकाणां व्यक्तिविवेककारप्रभृतीनां सूक्ष्मतो मतपरामर्शः । विस्तरस्तु मूलग्रन्थे ५मोल्लासेऽनुशीलितः । एवमपि दर्पणे ५मपरिच्छेदे व्यक्तिविवेककारमतखण्डनम् ।

(२) जासिनिप्रहनेत्यादिसूत्रातिदेशेनेति यावत् । अभियुक्तास्तु प्राकृतेऽत्र षष्ठीप्रयोगो द्वितीयास्थाने इति निर्दिशन्ति ।

(३) गाथायां सूत्रकृतां पिङ्गलादीनां मतेन पूर्वार्धस्योत्तरार्धानुयायित्वव्यवस्थायामेवमभिधानम् । यदत्र टीकाकृतामेतन्मतोपरि आक्षेप उदासीनतया तन्मतपाठाङ्गीकारश्च तत् टीकाकृत्सुलभपूर्वाचार्यमतखण्डननिर्बन्धमाविष्कृत्य कृतमित्येव सन्तोष्टव्यम् । वस्तुतस्तु प्रचुरगाथासाहचर्येण गाथाप्रसिद्धभावप्रपञ्चपञ्चनेन च गाथैवेयमिति नास्ति सन्देहलेशावकाशः ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥ १९॥

अत्र मयि न योग्यः खेदः, कुरुषु तु योग्य इति काक्वा प्रकाश्यते। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यं, प्रश्नमात्रेणापि काकोर्विश्रान्तेः।

---

भूते तस्मिन्नेव वञ्चकप्रकृतावनुरागातिरेकात् प्रणयखण्डनशङ्कामापूरयति। तदाह—तत्कामुकोपभोग इति, रागदार्ढ्यहेतुतया प्रणयभङ्गभयादिति शेषः। तथाभूतामिति—दृष्ट्वेत्यादौ प्रत्येकं योज्यम्। अनुचितस्य कर्मण आरम्भेण करणेन निभृतं गुप्तं यथा स्यात्तथा। खिद्यतेऽनेनेति खेदो मात्सर्यम्। खिन्ने ग्लाने। अत्रार्थे तु मयि खेदं भजतीति सोपहासोत्प्रासकाकाऽत्यन्तानौचित्यध्वननम्। तदाह-अत्रेति। वाच्यसिद्ध्यङ्गमिति। सिद्धिः परिपाकः शोभानिष्पत्तिरिति यावत्। प्रश्नेत्यादेरयं भावः—कुरुषु न भजतीति काकुः। ततश्च प्रश्नरूपः किमर्थमहमाक्षिप्त इति तस्यैव गुणीभावो न्याय्यः सर्वथा, अतएव गुणीभूतव्यङ्ग्यविभागे काकाक्षिप्तमित्याक्षिप्तपदप्रयोगः। उक्तस्य व्यङ्ग्यस्य क्रोधप्रकर्षाविद्धतया वाच्यपोषकत्वं नास्ति, अपि तु तत्पोष्यत्वमेव। अपिरेवार्थे(१)।

---

(१) अपिरेवार्थे—परं नात्र निर्बन्ध उचितः। विषयविवेक इति—विषयविवेके प्रदीपकृतां विवरणमुपयोगीति तत एव जिज्ञासुभिराकलनीय आशयः।

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥ १६ ॥

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्, चलितायान्तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभाऽतिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन्सुरतसुहृदस्तन्वि ! ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥१७॥

---

यद्यपि गुणीभावेऽपि न प्रकृतक्षतिस्तथापि प्रसङ्गादयं विषयविवेकः । तइआ तदा । णिम्मग्गं निमग्नाम्(१) । एण्हिं इदानीम् । अत्र तइआ एण्हिं इति विच्छित्तिकृतेन वाक्यमाहात्म्येन मुख्यतोऽर्थशक्तिरुद्भाव्यते, ततोऽन्यत्रापि किञ्चिद्वाक्यवैशिष्ट्यसम्भवे न काचित्क्षतिः । उद्देश इति–अयमिति प्रत्यक्षोत्कर्षनिर्देशः । कुञ्जानामुत्कर्षो मत्तमधुकरनिकुरम्बकराम्बितकुसुमसमृद्ध्यादिः । सुरतसुहृदः तत्कृतश्रमघर्मादिमार्जनेन सुरतरागदार्ढ्यदायिनः,

---

( १ ) 'णिमिता'मिति तु सार्वत्रिकः पाठः । यद्यप्यत्र नार्थतो वैलक्षण्यं तथापि 'णिमग्गा'मिति पाठः कष्टकल्पनाऽऽश्रयविरहात् वरम्। किन्त्वस्मिन् पक्षे वृत्तहानिनिवारणाय 'मह' इति पदस्याश्रवणम्। चण्डीदासदीपिकायां गाथानां सामग्र्यतश्छायाया अदर्शनात् किं तावत्तस्य साधारणसम्मतपाठत्यागे तात्पर्यमिति न स्फुटमवगम्यते ।

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

णोल्लेइ अणोल्लमणा (१)अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥ १८ ॥

अत्र सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयाचिद्‌द्योत्यते ।

---

ते ताद्रूप्यप्रसिद्धाः । अकाण्डकोपः आकस्मिकक्रोधः(२) । अत्रोक्तगत्या प्रतिपदं वाच्यस्य वैशिष्ट्यं मुख्यव्यङ्ग्यानुगुणव्यङ्ग्यान्तरमैत्रीलक्षणं, तत्सहकृतेन च वाक्यार्थेन वक्तुरभिप्रायकलनम् ।

णोल्लेइ नियुङ्क्ते(३) । अणद्दमणा(४) अनार्द्रमनाः । अत्ता श्वश्रूः । 'सञ्झाइ होइ ण व होइ' इति पाठः,नतु संज्झाइ होइ इत्यनन्तरं 'णवरे'त्यधिकं, वृत्तभङ्गप्रसङ्गादित्येके । तच्च न, गाथातो भिन्नवृत्तत्वात् , किन्तर्हि बहुपुस्तकादृष्टत्वादश्रव्यप्रायत्वाच्च वरं पाठानङ्गीकरणम्(५) । तटस्थो निकटस्थः प्रसिद्धपूर्वप्रणयः, न तूदासीनः, तत्र रहःसूत्रणोपयोगाभावात् । अत्र चान्यस्यो-

(१) 'अणद्दमणा' इति पाठान्तरम् ।

(२) श्रीधरकृते ०विवेके उद्देश–कुञ्जोत्कर्ष–नर्मदा–सुरत–तन्विवान्त्यादिपदानां प्रत्येकमभिप्रायप्रकटनम् । तथाचैतैरेवालम्बनोद्दीपनविभावानां प्राचुर्यस्थित्याऽत्रासंलक्ष्यक्रमव्यङ्ग्यरूपाकूतध्वननमपीति तात्पर्यम् ।

(३) नुदतीति छाया, नियुङ्क्ते प्रेरयतीति तु विवरणम् ।

(४) अमुल्लणमणां इत्यसंलग्नः पाठ आदर्शपुस्तके ।

(५) अत्र 'ण वे'ति साधारणसम्मतः पाठः । ण वरेति पाठे आर्या-

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।
एमेअ किन्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम्॥१९॥

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तामिति कयाचिन्निवार्यते।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामित्याश्वस्तां प्रति कयाचिन्निवेद्यते।

---

क्तव्यस्य सान्निधिः प्रकरणावसेयः। सुव्वइ श्रूयते। तुज्झ पिओ इति सोल्लुण्ठमभिधानं सख्याम्, अन्येषु तु रहःसङ्गोपनम्। एमेए एवमेव तदनुपयोगिसम्भारव्यग्रिम्ना। अत्र पूर्वं विदितरहस्याऽप्यभिसारोपकरणसम्भारं न निषेधयति, प्रत्युतान्यत्रास्यमाधत्ते, सम्प्रति तु कुतश्चित् प्रतीतगृहपतिसत्वरागमना तत्सज्जीकरणं विद्वेष्टीति प्रस्ताववैशिष्ट्यम्। अन्यत्रेति—अस्मीत्यहमर्थे। प्रच्छन्नः स्त्रीवेशमाधाय चेट्यादिभावेन(१) सदासान्निध्यानयोग्यः। आश्वस्तां

---

प्रस्तारस्थितस्य कस्यापि वृत्तस्य नानुरूप्यं, परं सर्वेषामेव विषमवृत्तानां तत्र स्थितानां गाथामध्ये परिगणनस्य सम्मतत्वात् कथमपि वृत्तभङ्गदोषो निवार्यः।

(१) 'चेष्टाऽऽदी'ति विकृतः 'क' पुस्तके पाठः।

गुरुअणपरवस पिअ किं भणामि तुह मंदभाइणी अहकं।
अज्ज पवास वच्चसि वच्च सअं जेव्व सुणासि करणिज्जम्॥२१॥

अत्राद्य मधुसमये यदि व्रजासि तदाऽहं तावद् न भवामि, तव तु न जानामि गतिमिति व्यज्यते।

आदिग्रहणाच्चेष्टाऽऽदेः। तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्य्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते॥२२॥

---

निश्चिन्ताम्(१) )। अत्रान्यत्रेति प्रतिपादितस्य देशस्यातिविविक्तादिरूपवैशिष्ट्यस्य साचिव्यमात्रं, प्राधान्यन्तु वक्तृवैशिष्ट्यादेरेव। एवं कालवैशिष्ट्येऽपि ज्ञेयम्। गुरुअणेति—जनपदेन बाहुल्यद्योतिना ग्राम्यत्वावगतिः। सुणासि जानासि। मधुसमये प्रकरणगम्ये। न भवामि न जीवामि। अत्राद्येति—निर्दिष्टक्रमेण गाढगाढीभविष्यन्मन्युर्वसन्तारम्भो वा प्रकृते पान्थावस्थाविशेषसहकारिसंस्थाने(२)। द्वारोपान्तेति—निरन्तरे संलग्ने। प्रच्छन्नः बाह्यालङ्करणभूतलज्जाभरेण प्रणयिसखीष्वप्येकान्ततया न प्रकाशितः।

---

(१) विश्वस्तामिति वा पाठः स्यात्। आदर्शपुस्तके तु श्विस्तामिति विकृतः पाठ उपलभ्यते।

(२) 'प्रकृतिपाद्यावस्था' इत्यादर्शपुस्तके पाठः। परं प्रतिपाद्यावस्थाविशेषसंस्थाने सहकारीति सङ्गतः पाठः स्यात्। यथास्थिते तु अन्वयबाधा स्फुटैव।

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । निराकाङ्क्षत्वप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते । वक्त्रादीनां मिथःसंयोगे द्विका-

---

आकूतविशेषो भावविशेषः । अत्र चेष्टायाः प्रोल्लास्येत्यादिशब्द-प्रतिपाद्याया विशेषो वक्तुः प्रत्यक्षरसमुदितरूपाद्वैशिष्ट्यं तत्काल-चमत्कारार्थमुल्लिख्यमानमेव सचित्रतामालम्ब्य काव्यभावके उदाहृतप्रतीतिप्रकर्षमाधत्ते(१)। चेष्टाऽऽदेरित्यादिग्रहणाद्वर्णनीय-नायिकाऽऽदिगतसात्त्विकादिपरिग्रहः । ननु 'गुरुअणे'त्यादावपि वक्त्रादिविशेषः सम्भवति । ततश्च द्वित्रिचतुरोदाहृतिदर्शनेनैव सिध्यतीत्याशङ्क्य बहूदाहरणोपयोगमाह—निराकाङ्क्षत्वप्रतिपत्तये इति । शिष्याणां निःसन्देहव्युत्पत्तयेऽनवसरेऽश्रद्धेय(२)—मवसरं प्राप्य-पुनः पुनस्तदेव वक्त्रादिविशेषसाचिव्यं न तु परस्परासङ्कीर्ण-रूपमुदाह्रियत उदाहरणैर्निश्चाय्यते । द्विकादिभेदेन क्वचिद्द्वयो-र्यथा—'अइपिहुल'मित्यादौ जलकुम्भादिगतदुर्वहत्वादिवाच्यस्य

---

( १ ) भावके बलाहृति—'क' पाठः ।

( २ ) प्राप्तावसरतयेत्यस्य प्रतीकस्यापाततो व्यतिरेकमुखेण विवृतिर्दीपिकायाम् । 'तत्सहकारिविशेषसमवधानादबाधितानेक-लक्ष्यसन्दर्शनेन शिष्याः सुशिक्षिता अक्षीणवैचक्षण्याः प्रगल्भा झटिति-विघटितविप्रतिपत्तयः सम्पद्यन्त इति पौनरुक्त्यभ्रमं निरस्यति । एवं तर्हि सर्वत्र निर्वेदनं प्राप्नोतीत्याह 'प्राप्तावसरतये'ति विवेक्तव्य-मत्रोद्धरणीयम् ।

दिभेदेनानेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम्(१) ।

---

बान्धवाद्यवगतदुःशीलत्वादिव्यङ्ग्यवक्त्रोः(२) । क्वचित्त्रयाणां यथा तइआ इत्यादौ वाक्यप्रतिपाद्यतत्प्राणेश्वरीरूपान्यसान्निधीनाम् । एवञ्चतुरादीनाञ्च वैशिष्ट्यस्य सहकारित्वेन व्यञ्जकत्वम् । अनेन क्रमेण वक्त्रादिवैशिष्ट्यस्य साहित्यविकल्पेन । लक्ष्यव्यङ्ग्ययोश्च । लक्ष्यस्य यथा तत्रैवोन्निद्रत्वाद्यतिशयस्य प्रणयभङ्गशङ्कायां व्यञ्जकत्वमुदाहार्यमुक्तोदाहरणेनैव गम्यमित्यर्थः(३) । अत्र चान्यार्थधीहेतुरित्यर्थशब्देनालङ्कृतिरसादिरूपयोरर्थयोः सङ्ग्रहो बोद्धव्यः । एतच्चादिपदसङ्ग्राह्यायां चेष्टायां द्वारेत्याद्युदाहृत्याऽत्र प्रच्छन्नकामुकविषय आकूतविशेषो ध्वन्यत इति वदता वृत्तिकृता सूचितमेव । तथाहि आकूतविशेषो भावविशेषः शृङ्गारसञ्चारिलज्जा-

---

(१) अत्र तत्र वक्तृबोद्धव्ययोगे यथा-अत्ता एत्त णिमज्जइ इत्यादिरधिकोऽशो रुचकश्रीधरादिभिर्मूलग्रन्थव्याकरणपरः स्वस्वटीकायामुपन्यस्तः । माणिक्यचन्द्रेण गोविन्दठक्कुरप्रभृतिभिश्चार्वाचीनैर्मूलग्रन्थाङ्गतयैव आदीयते ।

(२) अत्रादर्शपुस्तके वाच्यव्यङ्ग्यपदयारयथा व्यत्यासः ।

(३) गम्यमित्यर्थः—एकस्मिन्नेवोदाहरणे प्रायश एतादृशलक्ष्यव्यङ्ग्यार्थयोर्विच्छित्तिभृतोः सहावस्थानस्य सम्भवात् परवर्त्तिभिरालङ्कारिकैः कविकर्णपूरेति सार्थकनामधेयैरलङ्कारकौस्तुभे १मकिरणे लक्ष्यव्यङ्ग्यार्थप्राप्तपल्लवविभागः सुष्ठु दर्शितः । जिज्ञासुभि'र्नवजलधरधामे'त्यादिः श्लोकप्रपञ्चस्तत्रत्य आलोकनीयः ।

(३८)शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥२३॥

---

लक्षणो ध्वन्यत इति रसादौ भावध्वननेन शक्तिर्दर्शिता । तत्र च पार्यन्तिके ध्वननाङ्गीकृत्याऽन्तरालप्रतीतिकालकृतावर्थत एव तदुपगमो दर्शितः । एतदुभयव्याप्तेरपि(१) चाभिधाऽऽद्यनुमानादिबहिर्भावसाधने प्रगल्भा एवास्मदुक्तप्राचीनयुक्तयः । प्रमाणेति— सर्वस्यैव काव्यरूपस्य वाक्यार्थानियतप्रामाण्यस्यापि स्वप्रकाशरसाद्यास्वादप्रमित्ययोगव्यवच्छेदेन प्रामाण्यनियम इति सिद्धान्तरहस्यसूत्रणपरम्। एतच्च सिद्धान्तसङ्ग्रहे(२) निपुणं निरूपितमस्माभिरिति नेह गौरवभीत्या प्रपञ्चितम् । तत्सहकारिता तदनुगुणा काऽपि शक्तिः । न हि प्रमाणान्तरवेद्यो व्यञ्जकः प्रत्यक्षादिवेद्योऽर्थः प्रकृतमभिप्रायं फलतीत्याशयः । तस्मादन्वयव्यतिरेकाभ्यां शब्दस्यापि सामर्थ्यं कल्पनीयं नत्ववर्जनीयसान्निधित्व-

---

( १ ) 'एतदुभयव्यापृता'विति स्यात् । पाठोऽत्र विकृत इति प्रतिभाति ।

( २ ) आस्वादजीवातुः पदसन्दर्भः काव्यमिति संज्ञाप्रतिज्ञामारूढवतां टीकाकृतां तत्समानाशयानां प्राक्तनानां परवर्त्तिनां चैव उपष्टम्भो ग्रन्थत्रुटिपूरकत्वेन ग्राह्यः । एवमपि विवेकादिषु सिद्धान्तः । सिद्धान्तसंग्रहे टीकाकृत्कृतविस्तृततररसादिविवेचनपरे निबन्ध इति प्रागेव सूचितम् ।

शब्देति । नहि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ।

इति श्रीकाव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम तृतीयोल्लासः ॥ ३ ॥

---

मात्रे तस्येति सर्वत्रैवोभयशक्तिमूलता यद्यपि तथापि यत्रैकशक्तिरुद्भटा तत्रैकमूलतेत्यनाकुलमखिलम्(१) ॥

॥ तृतीय उल्लासः ॥

---

(१) 'इयतैव व्यञ्जकत्वनिर्णयो ग्रन्थकृता कृतः, केवलं विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यप्रभेदेऽर्थस्य विभावादिरूपस्य व्यञ्जकत्वस्यानुक्तत्वादव्याप्तिर्व्यञ्जकनिर्णयस्येति चिन्त्यमेतत् । यदि परं 'व्यक्तिरेव से'त्यनन्तरं 'रसादेः प्रतिपत्तये । विभावादिभ्य एवाऽभिव्यक्तिरर्थसमाश्रये'ति कारिका पठनीयेति युक्तियुक्तोऽभियुक्तानां प्राक्तनानां राजानकरुचकादीनां सिद्धान्तः । एवंविधेषु स्थलेषु प्राचीनटीकानामुपयोगित्वं सुप्रकटम्

# चतुर्थ उल्लासः ।

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथाऽपि धर्मिणि प्रदर्शिते धर्माणां

---

एवं व्यञ्जकाख्यामधिकां शब्दार्थयोः शक्तिमुपपाद्य तदुपयोगं ध्वनिगुणीभूतव्यङ्ग्यविभागपराभ्यां चतुर्थपञ्चमोल्लासाभ्यां सूत्रकृद्दर्शितवान् । तत्र केचित्, शब्दार्थनिरूपणार्थमेव वृत्तिविवेकः कृतो न स्वातन्त्र्येण, ततश्च तदनन्तरमेव(१) तद्धर्माणां दोषादीनां निर्णयः सुकरो भवतीति स एव कार्यः, ध्वन्यादिविभागस्तु पूर्वं पश्चाद्वा कार्य, इति प्रत्यवतिष्ठन्ते । तन्निराकुर्वन्नाह वृत्तिकृत्—यद्यपीति—निर्णयविभागव्यवस्थायाम् । धर्मिणीति—न खलु शब्दार्थमात्रधर्मा दोषा एव निरूप्याः, किन्तु

---

( १ ) वृत्तिविवेकान्तरमिति यावत् । वस्तुतस्तु काल्पनिकमेव सूत्रकारवृत्तिकारयोर्भेदमुररीकृत्यैवं टीकाकृतामाक्षेपस्तत्समाधानप्रयासश्च । यथाचात्र क्रमोल्लङ्घनप्रस्तावो न वरीवर्त्ति तथा प्राचीनतमैः काव्यप्रकाशसङ्केतकारराजानरकरुचकैस्तददोषाविति मूलग्रन्थकारिकाव्याख्यानोपक्रमे सप्रपञ्चं दर्शितम् । यदत्र दीपिकायां केचिदित्यादिना सन्दर्भेण केषाञ्चित्काल्पनिकसत्तावतां मतोद्घोषणं यथा शब्दार्थविवेकाव्यवहितोत्तरक्षण एव तज्जीवातूनां दोषगुणालङ्काराणां निर्णयः सुस्यङ इति न तत्र सूत्र-(कारिका)-ग्रन्थालक्षकं किमपि साहायकमासादयाम इत्यल पल्लवितेन ।

हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—

(३९)अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ।
अर्थान्तरं सङ्क्रमितमत्यन्तं वा तिरस्कृतम्॥२४॥

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येवाविवक्षितं वाच्यं यत्र स ध्वनौ इत्यनुवादाद्ध्वनिरिति ज्ञेयः।

---

काव्याङ्गरूपतद्विशेषगताः। एते च रसाद्याश्रयेणैव व्यवतिष्ठन्त इति रसादिध्वनिगुणीभूतव्यङ्ग्ये तावन्निरूपणीये। तत्प्रसङ्गेन तत्सजातीयानां वस्तुध्वन्यादीनां कर्कटीकण्टकन्यायेन पूर्वं पश्चाच्चावेष्टनतया तन्निरूपणमिति भावः। हेयोपादेयतेति—दोषाणां हेयतयैव गुणालङ्कृतीनाञ्चोपादेयतयैवात्र निरूपणम्। हेयोपादेयताबीजञ्च काव्यविशेषपरिज्ञान एव सुज्ञानं भवतीत्यर्थः। काव्यपदमत्र तद्विशेषध्वन्यादिपरम्। तद्भेदाः स्वलक्षणलक्षिता विशेषाः। तत्र च लक्षणामूलव्यञ्जकतायाः प्राथमिकतया प्रथमं तन्मूलध्वनिविवेकः(१)। अविवक्षितेत्यादिना वाच्यविभागो ध्वनिविशेषलक्षणद्वयसूचनपरः, अन्यथा ध्वनित्वक्षतेः। अविवक्षितं बाधितस्वरूपं वाच्यं यत्रेति सामान्यलक्षणं सूचितम्।

---

(१) इयमेवानन्दवर्धनाद्यालङ्कारिकवर्यानुसृता सम्प्रदायसिद्धा व्यवस्था। अभिधामूलस्य बहुविषयतया पश्चान्निर्देश इत्यूचुरेव तत्कारणोपन्यासः। उपरितमस्तु युक्तिबन्धः "एवं लक्षणामूलं व्यञ्जकत्वमुक्त, मभिधामूलन्त्वाह" इति द्वितीयोल्लासस्थं मूलग्रन्थमवलम्ब्य प्रादुर्भूत इति सोऽपि यथास्थित एव। (प्रदीपप्रभा)।

तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम्। यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥२३॥

अत्र वचनाद्युपदेशादिरूपतया परिणमति।

---

अनुपयुज्यमानत्वस्वरूपमात्रेणार्थान्तरे(१) विशेषरूपे परिणमितमिति संक्रमितमित्यस्य व्याख्यानं, तन्मयीकृतमित्यर्थः। णिचा काकादिसाहाय्यसूत्रणम्।

त्वामिति—समवायः समुदायः। तत्र साम्मुख्यादेव प्रतिपाद्ये नियते त्वामित्यस्य तावन्नोपयोगः। एवं वचनादेव कर्त्तरि ज्ञातेऽहमर्थस्यास्मीत्यस्य वच्मीत्यस्य च। आत्मीयामिति मतिमवलम्ब्यावस्थानस्यावश्यम्भावादेव सिद्धेः। तैश्चानुपयोगबाधितैरुपदेश्यत्वाप्तोपदेशाप्रमादावस्थितयस्तद्विशेषा लक्ष्यन्ते। तैश्च लक्षितैस्तदतिशयरूपा एवावश्यवाच्याहिताहितत्वालङ्घनीयाज्ञत्वादरग्राह्यत्वात्यन्तावहितताः प्राधान्येन व्यज्यन्ते। वच्मीत्यत्र लक्षणायाः स्फुटतया तन्मुखतया निर्दिशति—अत्र वचनादिरिति। अनुपपद्यमानतयेति—सर्वथेति शेषः।

---

(१) स्वरूपमात्रेणेति वृत्तिग्रन्थपूरणम्। परिणमितमिति—एवं काव्यप्रकाशविवेके "अत्र हि वाच्यस्यानुपपत्त्यभावादनुवृत्तिधर्मरूपतया लक्ष्यप्रतीतिवेलायां न परित्यागः, किन्तु तत्सहितस्य लक्ष्यस्य प्रतीतिः—अत एवात्र परिणामोक्ति"रिति।

क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतम्। यथा—

उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे!
सुखितमास्स्व ततः शरदां शतम्॥ २४॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति।

(४०) विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।

अन्यपरं व्यङ्ग्यनिष्ठम्। एष च—

(४१) कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥

अलक्ष्येति—न खलु विभावानुभावव्यभिचारिण

---

अतएवात्यन्ततिरस्कृतं, नतु तद्धर्मोऽप्युपपद्यत इत्यर्थः। उपकृतमिति—अत्र वक्त्रादिवैशिष्ट्यान्मुख्यार्थबाधः, लक्षणयाऽपकाराद्यतिशयश्च गूढो व्यङ्ग्यः। विवक्षितमिति—अबाधितत्वेनेत्यर्थः। अन्यपरतयैव विवक्षितं, न तु गुणीभूतव्यङ्ग्यमाक्षिप्य विश्रान्तामित्यर्थः। अन्यपरमित्यस्य व्याख्यानं व्यङ्ग्यनिष्ठं सर्वात्मना तत्प्रवणमित्यर्थः। अलक्ष्यः क्रमः प्रतीतिपौर्वापर्यं यत्र, तदलक्ष्यक्रमं तथाभूतं व्यङ्ग्यं यत्रेति विग्रहः। एवमुत्तरत्र।

यद्यपि लक्षणामूलेऽप्यस्ति लक्ष्यक्रमव्यङ्ग्यता तथापि तस्य तद्व्यभिचार एवेति नोपन्यासः, तत्र च लक्ष्यपदार्थपर्यालोचनयैव लक्षणं लभ्यत इति न पृथङ् निर्देशः(१)। न खल्विति—

(१) एतच्च सर्वमापाततो विवेकक्रन्मन्तव्यमनुसृत्य।

एव रसो,ऽपि तु रसस्तैरित्यस्ति क्रमः; स तु लाघवान्न लक्ष्यते । तत्र—

(४२) रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥२६॥

तन्मात्रस्य रसत्वे सहृदयासहृदयव्यवस्थाविरहप्रसङ्गादिति भावः । तैराविष्क्रियत इति शेषः । ते च प्रतीयमाना एव रसमाविर्भावयन्ति, अन्यथाऽतिप्रसङ्गादित्याह—इतीति--अतो हेतोरस्ति क्रमस्तत्प्रतीत्योः, स तु न लक्ष्यते । वस्तुसामान्येन(१) (सामग्र्येण) प्रतीत्यन्तरालकालस्याम्बुजपत्रसहस्रव्यतिभेदवदति सूक्ष्मत्वादिति शेषः । अत्र च रसवति काव्ये वस्त्वलङ्कारव्यङ्ग्ययोरपि न प्रतीतिविलम्बो झटित्यास्वादपर्यन्तगमनात् । वस्तुतस्तु नीरसे प्रतीतिविलम्बात्तत्साजात्येन लक्ष्यक्रमव्यवहार इति बोद्धव्यम्(२) । तत्र ( तत्रेति-) तयोर्मध्ये अलक्ष्यक्रमस्य रसादिरीदृशस्वरूपव्यवस्थाहेतुरित्यर्थः । तदाभासेति-तत्पदेन रसभावयोरनुकर्षः । अक्रम इति—नञ् ईषदर्थेऽज्ञेयतापरम् ।

---

( १ ) साम्बन्ध्येनेति 'क' पुस्तकेऽशुद्धः पाठः ।

( २ ) आचार्य्याभिनवगुप्तप्रभृतीनां सिद्धान्तमुपजीव्यैवमुक्तिः । अखण्डबुद्धिवेद्यस्यानन्दमयस्य रसस्य कथं खण्डबुद्धिनिर्ग्राह्यैः पृथक् पृथगुलपभ्यमानैर्वस्त्वलङ्कारध्वनिभेदैः स्थासंस्थापितैः साजात्यमित्यस्वर्थैषोक्तिः । परं शब्दचित्रार्थचित्रप्रभृतीनां नीरसानां संलक्ष्यक्रम वस्त्वलंकृतिध्वनिभेदैः सह साजात्यं ध्वनिप्रस्थानपरमाचार्याणां तन्निबन्धकृताञ्च बहूनां न स्वरस इत्यतिरोहितमेतत् प्रेक्षावताम् ।

आदिग्रहणाद्भावोदय-भावसन्धि—भावशबल-त्वानि । प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यो यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्ग-

---

रसाद्यलङ्कारादिति-रसादिश्चासावलङ्कारश्चेति(१) कर्मधारयः । अलङ्कार्यतया स्थित इति भिन्नत्वे हेतुः । आदिग्रहणाद्भावशाबल्या-दिरिति । तत्रेति-प्रधानतया बाध्यताऽऽदिराहित्येनालङ्कार्यः । अलङ्कारादिकृतपरिपोषमात्रत्वेनालङ्कारव्यपदेशो योग्यः । न चैतद्वाङ्मात्रमित्याह-तथोदाहरिष्यत उदाहरणदर्शनेन विविक्तः करिष्यत इत्यर्थः। वाक्यार्थे रसाद्यन्तररूपे वस्तुमात्ररूपे वा । अङ्ग-भूतः शोभाविशेषकः । आदिरिति वाक्यार्थादिसङ्ग्रहः कार्यः

---

( १ ) अत्र वृत्तिग्रन्थेऽलङ्कारपदं पारिभाषिकमनुप्रासोपमादिपरं, न पुनः 'सौन्दर्य्यमलङ्कार' इति वामनकृतनिर्देशेन सौन्दर्य्यसामान्येना-नुगतार्थं यत्किञ्चिदिति वृत्तिग्रन्थत एव स्फुटं प्रतीयते । न च दशमो-ल्लासे रसवत्प्रेयऊर्ज्जस्विसमाहितादीनामनुद्देशस्तद्व्याख्यानकल्पे प्रति-कूल इति मन्तव्यम् । सुविदितमेवैतद्यदलङ्कारोल्लासस्योत्तरार्द्धमपरेणा-पूरि । अलङ्कारमाहात्म्यवादिनां भामहोद्भटप्रभृतीनामनुसारिणस्तस्य 'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।काव्ये तस्मिन्नलङ्कारो रसा-दिरिति मे मति'रिति स्पष्टनिर्दिष्टध्वनिप्रस्थानसिद्धान्तेऽनादरवन्त,स्त-दन्तस्यानिबन्धनस्य सुशकवल्पनत्वात् । एवं सर्वेऽपि प्राचीनाष्टीका-कृतो रुचकश्रीधरश्रीविद्याचक्रवर्तिप्रभृतयः । उदाहारिष्यत इत्य-स्य पृथगलङ्कारतया विवेचयिष्यत इति सम्प्रदायप्रकाशिन्यां शेषो-क्ताचार्याणां विवृतिस्तत्र प्रमाणम् ।

भूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्-प्रेय-ऊर्जस्वि-समाहितादयोऽलङ्काराः । ते च गुणीभूतव्यङ्ग्याभिधान उदाहरिष्यन्ते ।

---

(१) । गुणीभूतव्यङ्ग्य इति—तैरुपाधिभिर्ध्वनिव्यवहारानिरासः, नतु तत्सद्भावे ध्वनिव्यतिरेकनियमः, प्रधानभूतरसाद्यपेक्षयाऽसम्भाव्यत्वात् । रसवदिति—अलङ्कारस्यालङ्कारिपारतन्त्र्यध्वननया काव्यविशेषणपदेन तदभिधानम्(२) । एवमुत्तरत्रापि । भावस्यालङ्कारत्वेन प्रेयः प्रियतरं काव्यम् । [अत्र रसवति काव्ये वाच्यव्यङ्ग्ययोरपि न प्रतीतिविलम्बो, झटित्यास्वादपर्यन्तगमनात्; किन्तु नीरसप्रतीतिविलम्बात्तत्साजात्येन लक्ष्यक्रमव्यङ्ग्यव्यवहार इति बोध्यम्(३)]।ऊर्जस्वि-रसाभास-भावाभासा-

---

(१) रसादिरित्यत्र 'आदि' पदेन भावरसाभासभावाभासभावोदयभावसन्धिभावशबलत्वानां ग्रहणमिति प्रायः सर्व एव विवरणकाराः। यदि कथञ्चिदपि चण्डीदाससम्मतोऽर्थः स्वीक्रियेत तथाऽप्यत्र वृत्तिग्रन्थे तदर्थेऽन्वयो न सूपपाद इति प्रतीयते ।

(२) रसवत्पदनिरुक्तविमर्शनद्वारा रसवतोऽलङ्कारतां निराकर्त्तुकामेन कुन्तकेन स्वग्रन्थे रसो विद्यते यत्रेति तस्य काव्यविशेषणत्वमुट्टङ्कितम् । रुय्यककृतेऽलङ्कारसर्वस्वे रसो विद्यते (यत्र निबन्धे) यत्र निबन्धने व्यापारात्मनि तद्रसवदिति निरुक्तिर्दर्शिता । तत्र जयरथसमुद्रबन्धयोष्टीकाकृतोर्विवृती आलोकनीये ।

(३) अयमंशो द्विरुपक्षिप्त इति प्राचीनाद् ग्रन्थादेवावसीयते (९२ पृः)। अत्रायं निरवकाशो वर्जनीयश्च । आदर्शभूतमूलपुस्तके सङ्कलयित्रा प्रमादेनैक एव सन्दर्भो द्विर्गृहीतः स्यात् ।

तत्र रसस्वरूपमाह—

(४३) कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावा अनुभावास्तत्(१) कथ्यन्ते व्यभिचारिणः ।

---

लङ्कृत्यनुप्राणितत्वेन चमत्कृतिविशेषाधानक्षममूर्जस्वि, भावप्रशमालङ्कृतिसाचिव्येन सम्यगाहितं भवति चमत्करणमनेनेति समाहितम्, आदिपदेन भावोदयनामालङ्कृतिपरिग्रहः । गुणीभूतव्यङ्ग्यं काव्यमभिधीयते विशेषलक्षणार्थमावध्यतेऽत्रेति गुणीभूतव्यङ्ग्याभिधानः पञ्चमोल्लासः ।

तत्रासंलक्ष्यक्रमे ध्वनौ प्रसक्ततयेति शेषः । स्वमान्तरं रूपं ननु रूढ़िकल्पितमिति भावः । कारणानीति—अथशब्दश्चार्थः कार्यानीत्यत्र योज्यः । यानीति कारणानीत्यादिभिः तानीति च विभावा इत्यादिभिः प्रत्येकमन्वीयते । लोके रामादिगतस्य स्थायिनोऽन्तरा भावोत्पत्तावप्यनवच्छिन्नवासनस्य यानि कारणान्यालम्बनानि सीताऽऽदीनि, उद्दीपनानि चोद्यानादीनि, तानि चेन्नाट्यकाव्ययोरभिनयशब्दविशेषाभ्यामुपनीयन्ते तत्तदा भावुकगतरसवासनान्तर्लीना रत्यादयो विभाव्यन्ते आस्वादाङ्कुर-

---

( १ ) 'अनुभावाश्चे'ति क्वाचित्कः पाठः । उपरिधृतपाठे 'तदि' त्यस्य तदेत्यर्थकस्य 'चेदि'त्यनेन पूर्वप्रघट्टकस्थितेन सम्बन्धः ।

व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥

प्रादुष्करणयोग्याः क्रियन्ते एभिरिति विभावाः कथ्यन्ते (१)। एवं कार्याण्यालिङ्गनादीन्यनुभावयन्ति परिपोषयन्तीत्यनुभावाः। सहकारीणि हर्षादीनि निजनिजविभावानुभावरसमुखेन दर्शितानि सन्ति विशेषेणाभिमुख्येनाचरन्तीति व्यभिचारिणः। किमतो यद्येवमित्याह—व्यक्त इति। तैः कारणादिभिर्विभावाद्यैर्विभावादिव्यपदेशानुगुणामवस्थामापन्नैर्व्यक्तः प्रादुष्कृतः स्थायी प्रत्यभिज्ञायमानपूर्वरूपानुगमो रत्यादिर्भावो भाव्यते वास्यत इति वासनाऽऽत्मतया सहृदयहृदयलीनो रसः स्मृतो ध्वनिकारमतानुसारिभिराम्नातः। व्यक्तो व्यक्तीकृत एव रसो, न तु रसः सन्व्यज्यत इति वदता रसस्य व्यक्तिरूपत्वाभिमतप्रतीतिशरीरानन्यत्वं सूचितम्। तदुक्तं श्रीमल्लोचनकारपादैः—रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद्व्यवहार(२) इति। यद्य-

(१) तथा च भारतीये नाट्यशास्त्रे "विभाव इति कस्मादुच्यते? विभावो विज्ञानार्थः। विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावा इति"। "अथानुभाव इति कस्मादुच्यते? यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयमिति"। वस्तुतस्त्वेतदुपलक्षणमात्रं, दृश्येतरकाव्येष्वपि तथा प्रसङ्गात्। सर्वसाधारणीकृतासाधारणरसपदार्थनिष्पत्तिसामग्रीयं खण्डशो वितत्य दर्शितेति निरपह्नवेयं शैली।

(२) ध्वन्यालोकलोचने (काव्यमाला ६९ पृः)। एतदनुषङ्गी लोचनग्रन्थः "प्रतीतिरेव विशिष्टा रसने"त्यादिः "अभिव्यज्यन्ते रसाः प्रतीत्यैव च रस्यन्त इती"त्यन्तो जिज्ञासुभिराकलनीयः।

उक्तं हि भरतेन—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"रिति। एतद्विवृण्वते—विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः

---

प्यखण्डः काव्यार्थ इति नीत्या विभावनादिसम्भिन्नानुविद्धात्र रत्याद्यंशकर्बुरितस्वप्रकाशानन्दचमत्कार एव रसस्तथापि लौकिकदशाप्रसिद्धप्राधान्यप्रत्यभिज्ञानमाश्रित्य स्थायी रत्यादी रस इत्युक्तम्(१)।

अस्यार्थस्य साम्प्रदायिकतामाह—उक्तं हीति—भरतेन तत्कृतशास्त्रे विभावानुभावव्यभिचारिणां योगात्परस्परसाचिव्यलक्षणाद्रसनं रसस्तस्य निष्पत्तिः स्वत एवाविर्भावः। सात्त्विकानां तु स्तम्भादीनामनुभावतया तद्धेतूनाञ्च मुख्यतः सात्त्विकादिपदवाच्यानां सत्त्वाविर्भावविशेषाणां स्तम्भादितत्कार्योदयप्राचुर्यदर्शनेन तथैवाङ्गीकार्याणां व्यभिचारितयाऽपृथग्गणनम्। सम्प्रति स्वासिद्धान्तव्यवस्थां दर्शयितुमस्य भारतीयसूत्रस्याचार्यदेशीयदर्शितव्याख्यानतुच्छता-

---

(१) "रसावस्थः परं भावः स्थायितां प्रतिपद्यत"इति दशरूपककृत्कारिका "विभावानुभावसात्त्विकव्यभिचारिभावैरुपनीयमानः परिपूर्णस्थायिभावो रस्यमानो रस" इति रसतरङ्गिणीविवृतिश्चैतदेव लौकिकदशाप्रत्यभिज्ञानमुपजीव्य सिद्धे। "परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्य' इति टीकाकृत्स्वरस एव तत्त्वम्।

प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो, मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपताऽनुसंधानान्नर्त्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः ।

---

प्रकटनपूर्वकसम्प्रदायव्याख्यानप्रकर्षणायोपक्रमते—एतदिति । आलम्ब्यन्ते विषयीक्रियन्त इत्यालम्बनानि ललनाऽऽदयः, उद्दीपयन्त्युद्बोधयन्तीत्युद्दीपनान्युद्यानादयस्तानि चोभयानि स्वरूपोद्बोधयोः कारणानि । आलम्बनोद्दीपनानि च तानि कारणानि चेति कर्मधारयः । उपचित इति सञ्चारिभिरन्तराऽन्तरोत्पन्नैर्हि रसादि विच्छिद्यते । किन्तर्हि गूढैर्गाढीक्रियते । नर्त्तक इत्युपलक्षणं, काव्यपाठकेऽपि ज्ञेयम् (१) । प्रभृतय इति तत्समानशीलपरिग्रहः । अत्र रामादिगतरत्यादिरेव रसः, तद्विषयप्रेक्षकप्रतीतिर्वा, नटादिगततया प्रेक्षकाणां रत्यादिसम्भावनं वा ? तत्र सर्वत्र रस इति नाममात्रमेव, न तु रस्यमानताप्राणत्वमित्युपक्षीणोऽयं पक्षः(२) ।

---

(१) "दशरूपकस्यैव हीदं सर्वं विलसितं यदुत कथाऽऽख्यायिके महाकाव्य"मिति काव्यालङ्कारसूत्रवृत्तौ वामनः । वासनावतः सहृदयस्य नाट्यप्रेक्षकस्थानीयत्वोपपत्तिर्निरूढा । एकत्र वागङ्गाद्यभिनयसंवलितसहायसाध्यत्वमन्यत्र सत्कविवचनगोचरतागुम्फितत्वमिति तु पर्यवसाने न महान्भेदः । एवमप्यभियुक्तोक्तिः 'काव्येऽपि नाट्यायमानः स(रस) एव काव्यार्थः' इदमेव लक्ष्यं कक्षीकरोति ।

(२) उत्पत्तिवादिनां रसस्य स्वप्रकाशानन्दचिन्मयत्वमनादि-

राम एवायम्, अयमेव राम इति, न रामोऽय-, मित्यौत्तरकालिके बाधे, रामोऽयमिति, रामः स्याद्वा न वाऽयमिति, रामसदृशोऽय,मिति च सम्यङ्मिथ्या-संशय-सादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादि-न्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे —

सेयं ममाङ्गेषु सुधारसच्छटा
सुपूरकर्पूरशलाकिका दृशोः।

---

राम एवायामिति रामत्वस्यायोगव्यवच्छेदः। अयमेव राम इत्यन्ययोगव्यवच्छेदः। उभयरूपा चेयं प्रतीतिरप्यसम्यग्-विषयाऽबाधस्थले, औत्तरकालिके बाधे सत्यपहार्यविषया। रामोऽयमिति प्रतीतिर्मिथ्या। रामः स्यान्नवेति संशयः। राम-सदृशोऽयमिति सादृश्यप्रतीतिः। एतद्विपरीततया बालादीनां यथा तुरगचित्रे तुरगप्रतीतिस्तथा रामोऽयमिति वस्तुपरि-च्छेदपर्यवसानशून्या या प्रतीतिस्तया ग्राह्ये चक्षुर्विषयीकृते(१)-ऽभिनयकर्त्तरि। कारणादिभिः कृत्रिमैरपि तथा कृत्रिमतयाऽनभि-मन्यमानैरिति दूरेण सम्बन्धः।

कुतः पुनः कृत्रिमतयाऽपि कारणादीनां नटे सम्भव-इत्याह—सेयमिति। एतत्पद्यद्वयं सामर्थ्यात्सेयानुभाव-

---

वासनोपनतरत्यादितादात्म्यमयवपुःसतत्वं रसस्यानुभवसिद्धमपलप-तामियं गजनिमीलिकैव।

(१) 'शून्याया रत्युर्विषयीकृते' इत्यशुद्धः पाठः 'क' पुस्तके।

मनोरथश्रीर्मनसः शरीरिणी
प्राणेश्वरी लोचनगोचरं गता ॥ २५ ॥

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥२६॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाऽभ्यासप्र(१)-वर्त्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारण-कार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्वि-भावादिशब्दव्यपदेश्यैः संयोगाद् गम्यगमकभावरूपा-दनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानु-मीयमानविलक्षणः स्थायित्वेन सम्भाव्यमानो रत्या-

सञ्चारिविशेषं यथाक्रममालम्बनोद्दीपनाभिधायकं सम्भोग विप्रलम्भरूपभेदद्वयप्रकटकं वा । इत्यादीनां काव्यानां यदनुसन्धानं कविविवक्षितानुकार्यगतविशेषस्य काक्का-दिना साक्षादिव करणं तद्बलात् । शिक्षा परम्परोपदेशः । अभ्या-सः पौनःपुन्येन प्रवृत्तिरुत्कर्षाधानहेतुः । ताभ्यां प्रवर्त्तितं यत्स्वकार्यं प्रयत्नविशेषनिर्वाह्यं सात्त्विकसजातीयमश्रुरोमाञ्चादि, तत्प्रकटनप्रकाशितैः सम्भाव्यतामुपनीतैः । गम्यगमकभावेति—गम्यं रत्यादि, गमकमनुमापकं कार्यकारणादि । अनुमयिमानो रामा-दितादात्म्यप्रतीयमानतयेति शेषः । रसनीयत्वेन स्पृहणीयत्वेन । स्थायित्वेन कालान्तरेऽप्यपरिच्छेदित्वेन दार्ढ्यदर्शनादिति भावः ।

( १ ) 'निर्वर्त्तिते'ति प्रायिकः पाठः । 'प्रवर्त्तिते'ति श्रीधरचण्डी-दासश्रीविद्याचक्रवर्तिप्रभृतिभिष्टीकाकृद्भिर्धृतः पाठः ।

दिभावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्य-माणो रस इति श्रीशङ्कुकः।

---

रत्यादिरिति—भाव इत्यस्य विवरणम्। तत्र न केवलं नटे(१) काव्यपाठके-(ऽपि) असन्नपि(२) सामाजिकानां प्रेक्षकाणां वासनया तन्मयीभावाधायिन्या धिया चर्व्यमाणः पुनः पुनरनुसन्धीयमानो रस इति श्रीशङ्कुकनामा कश्चिदभियुक्तः(३)। अत्रापि भावकैर्नटादिगततयाऽनुमीयमानो रत्यादी रसः, भावक-गतं तदनुमानं वा? आद्ये सामाजिकचमत्काराभावप्रसङ्गः, तेषामनुमानाभासमात्रोत्पत्तेः। तदनन्तरं सुखोत्पत्तिरिति चेत्, किमनेनाभिमतं भवतः? किं कार्यं सुखं रसो, रसेन वा सुखं क्रियते? तत्राद्यो दूषयिष्यते, द्वितीये तु कोऽयं रसो यस्य कार्यं सुखमिति गहनानिष्कृतिः। भावकगतानुमानमात्रेऽ-प्ययं दोषः, सुखादितादात्म्याङ्गीकारे तु साक्षात्काररूपस्वप्रकाशा-नन्दस्य रस्यमानताऽनुभवेनास्माकीं सिद्धान्तशय्यामधिशय्य

---

(१) 'तत्र नटे' इति मूलपुस्तके पाठः।

(२) 'पाठकासन्नपोऽत्ययथासंश्लिष्टः' 'क' पाठः।

(३) अनुमितिवादिनां श्रीशङ्कुकप्रभृतीनां मतं सप्रपञ्चमावि-ष्कृतं खण्डितं च श्रीमदभिनवगुप्तपादैर्ध्वन्यालोकलोचनेऽभिनव-भारत्यां च। मतस्यास्य दृश्यकाव्यप्रसङ्ग एव स्फुट उपयोगः। अस्मिन्नपि मते चर्वणैकप्राणस्य रसस्य स्वगतत्वं स्वात्ममात्रवि-श्रान्तत्वमलौकिकचमत्कारसारत्वञ्चापहस्तितमित्यमनोज्ञमेतत्।

न ताटस्थ्येन, नात्मगतत्वेन रसः प्रतीयते, नोत्पद्यते, नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो

---

दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेयाः(१) ।

ताटस्थ्येनेति(२)-उदासीनत्वेन, रसनीयत्वाभावप्रसङ्गात् । नात्मगतत्वेन प्रतीयते पूर्वसिद्धत्वाभावात्, वर्त्तमानस्य साक्षात्कारविरहाच्च । नोत्पद्यते-सीताऽऽदिविषयत्वेन रत्युत्पत्तौ पातकित्वापातात्, स्वकान्तविषयत्वेन तदनुसन्धानापत्तेः, रत्यादिषु भावप्रसङ्गाच्च(३) । नाभिव्यज्यते,ऽभिव्यक्तेर्ज्ञानविषयत्वेन

---

(१) साहित्यदर्पणकृता विश्वनाथकविराजेन सन्दर्भस्यास्य "यद्यपि रसानन्यतये"त्यादेरित ऊर्द्ध्वं प्रक्रंस्यमानस्य स्वग्रन्थे "सुखादितादात्म्याङ्गीकारे चे"त्यादेश्च (६५ पृः) एकत्रोद्धारः कृतो रसस्य स्वप्रकाशत्वमखण्डत्वञ्च प्रतिष्ठापयितुम् । टीकाकृत्त्विहाभिनवगुप्तप्रभृतीनां मतमनुवादेन द्रढीकरोति । परम् आस्वादजीवातोः पदसन्दर्भस्यास्वादनिष्पत्तिक्रियायां तेन महती आस्था स्थापितेति गड्डलिकाप्रवाहपतितेभ्योऽस्य स्फुटं वैलक्षण्यम् ।

(२) एवमादर्शपुस्तके । 'न ताटस्थ्येने'ति मूलानुगतः पाठः स्यात् । लोल्लट-शङ्कुक-भट्टनायकानां मतानि किं सारत उत स्वरूपतः सामग्र्येण तत्कृतनाट्यशास्त्रविवरणेभ्यो निष्कृतानीति दृढतया वक्तुमिदानीं न पार्यते । परमभिनवभारत्यां ध्वन्यालोकलोचने च सङ्कलितसारे तत्तन्मतोद्धारेऽयमेव प्रायः पन्था वक्तव्यविषयोपस्थापने प्रमाणसिद्धः क्रमश्चेति प्रक्रान्तादवसीयते ।

(३) टीकाग्रन्थोऽत्र नातिस्फुटः । 'स्वगतत्वेन तथाभावेन रसस्य भावनीयत्व'मिति विवेकमन्तव्यादत्र टीकायां भावपदेन "रति-

द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्व-

तद्दूषणग्रस्तत्वात्। काव्ये नाट्ये च कृतास्पदेन भावकत्व-व्यापारेण भाव्यमानः सकलसामाजिकगततया सम्भाव्यमानः। कोऽयं भावकत्वव्यापार इत्याह—अभिधातो द्वितीयेन साधारणी-करणात्मना। अभिधेति भट्टादिप्रसिद्धवृत्त्युपलक्षणम्(१)। तदति-रिक्तेन समुद्रलङ्घनोत्साहशालिहनुमदादिवर्णनीये कवित्व-

देवादिविषये"त्यादिरर्वाग् लक्षित उद्दिष्टः स्यादित्यनुमीयते। एवं विवेके—'भट्टनायकदर्शने तु रसस्योत्पत्तिप्रतीत्यभिज्ञप्तिपक्षा-न्दूषयित्वा भोगपक्षः प्रतिष्ठापितः। तत्रोत्पत्तिवादिना लोल्लटेन विभावैरेवोत्पत्तिरङ्गीकृता, अनुभावव्यभिचारिणोः प्रत्यायकत्वेन पोषकत्वेन चाभ्युपगतत्वात्।......प्रतीतिस्त्वनुमानरूपा श्रीशङ्कुके-नाङ्गीकृता। अभिव्यक्तिः पुनर्विद्यमानस्यैव स्थायिनो ध्वनिवादिना-ऽभ्युपगता। तत्र त्रयाणामपि पक्षाणां साधारणमिदं दूषणम्। स्व-गतत्वेन तथाभावेन रसस्य भावनीयत्वम्, परगतत्वेन ताटस्थ्याद्रस-नीयत्वाभाव एवे'त्यादिः। तथा माणिक्यचन्द्रोऽपि 'किञ्चोत्पत्ति-पक्षे सीताऽऽदिषु कामित्वं स्यात्। करुणस्योत्पादाद्दुःखितत्वञ्चे'त्यादि वदन् सम्प्रदायप्रवर्तयितुरभिनवगुप्तस्यैव मतमनुवदति।

(१) तेन अभिधात इत्यनेन लक्षणात इत्यपि बोध्यमिति टीका-कृत्सम्प्रदायः। 'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार' इति स्वयं वदता भट्टनायकेनाप्यभिधापुच्छभूताया लक्षणाया मीमांसा-ऽऽदिदर्शनस्वीकृतसामर्थ्याया उद्देशो विहितः। अभिधाविलक्षणैव रसप्रतीतिरिति तत्पक्षो निष्कलङ्कः। अत्र लोचनग्रन्थः "काव्यात्मनः शब्दस्य त्र्यंशताप्रसङ्गात्। तत्राभिधायकत्वं वाच्यविषयं, भावकत्वं रसादिविषयं, भोक्तृत्वं सहृदयविषयमिति त्रयोऽंशभूता व्यापाराः"।

व्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टभावकानां भेदानुव्यवसायरूपेणेत्यर्थः। स्थायी रामादौ स्थिरः। भोगेन भुज्यते विषयीक्रियते। कोऽयं भोग इत्याह—सत्त्वेति। सत्त्वस्योद्रेको रजस्तमसी अभिभूयाविर्भावस्तस्मात्प्रकाशः स्पष्टतरो य आनन्दस्तन्मयी तदेकरूपा या संवित्तत्र विश्रान्तिः पूर्वापरानुसन्धानादिबाह्यप्रमेयव्यासङ्गाभावः, स एव सतत्त्वं स्वरूपं यस्य तेन। विश्रान्तिगतत्वेनेति पाठे विश्रान्तिं गतः प्राप्तो विश्रान्तिगतः प्रमाता तस्य भावो धर्मो विश्रान्तिगतत्वं(१) तेनेति भट्टनायको ध्वनिदर्शनविद्वेषी मन्यते। अत्र किंगतो रत्यादिः साधारण्याभिमानविषयो भोग्यतामापद्यते ? न तावदनुकार्यानुकर्त्तृगतः, असन्निहितस्य भोगविषयताऽनुपपत्तेः, साधारण्यबलादेव भावके सन्निहित इति चेत्, तथापि वास्तवताविरहेण तद्बुद्धेरप्रमात्वापातः। कुरु च तत्र प्रामाण्यमनियतम्(२)। किञ्च साधारण्येन प्रतीतस्य साधारणघटादिवदरस्यमानत्वमेव। अतएव 'साधारणत्वाकारोऽपि तत्र नोन्मिषति स्फुट'मित्यवोचं ध्वनिसिद्धान्तसंग्रहे(३)। किञ्च भोगविषय एव भोग्यः, न च

(१) न्यायपञ्चाननोपाधिको जयरामोऽप्येतदेव पाठद्वयमुद्धरति स्वटीकायाम्। अभिनवभारत्यां बरोदामुद्रितायां 'संविद्विश्रान्तिविलक्षणेन परब्रह्मास्वादसविधेन भोगेन भुज्यत' इति पाठः।

(२) अत्र पाठो न सम्यङ् इति प्रतिभाति।

(३) इतः सिद्धान्तसंग्रहग्रन्थः कारिकावृत्त्यवयवद्वयसमन्वितो निबन्धग्रन्थ एवेत्यनुमीयते।

नायकः ।

---

रसस्तथा, तस्य तद्ग्राह्यसिद्धत्वाभावादिति प्रतीतिपक्षोक्तदोषः । कथं तर्हि व्यञ्जनपक्षेऽपि निस्तार इति चेत्, सत्यं, प्रकाशप्रादुष्कृतकल्पनाममात्रेणैव रसादिप्रतीतौ न व्यञ्जनाऽभिधानमङ्गीक्रियते । वस्तुतस्तु विलक्षण एवायं व्यापारः, अतएव रसनास्वादनचर्वणादयो विलक्षणव्यपदेशाः । व्यञ्जकता तु पृथक्सिद्ध एवार्थे भवति । यथोक्तं प्राचीनैः—

स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात् ॥ इति(१)॥

न च वाच्यं, मत्पक्षेऽपि दीयतामियमेव प्रसारिणी दृष्टिः, भोगैकार्थस्यैव हि रसे भोज्यत्वमुपचरितमस्तीति । एवं तर्हि नामान्तरमेव भोगो रसनं व्यञ्जनञ्च, इत्यस्मानेव सर्वात्मना शरणं गतोऽसि । ततश्च निवर्त्त्यतामस्माकं सर्वेषामुपजीव्येभ्यः सकलरसाचार्यचक्रवर्त्तिभ्यो ध्वनिकारपादेभ्यः पूर्वप्रहिता रोषकषायविषमा दृष्टिः, अङ्गीकुरु च सहृदयहृदयचिरनिद्राणानादि-

---

(१) इयं प्राचीनानां कारिका व्यक्तिविवेके, रुचककृते काव्यप्रकाशसङ्केते, विश्वनाथकृते साहित्यदर्पणे चोद्धृता । शान्तरक्षितकृते तत्त्वसंग्रहे ( कारिका २१७०, २२६६, २६०३ ) प्रभाचन्द्रकृते प्रमेयकमलमार्त्तण्डे (३० क । ३० ख पृः) घटप्रदीपन्यायमयोऽयं नयः समुद्दिष्टः । एवमभिनवगुप्तपादा आहुः "रस्यतैकप्राणो ह्यसौ, न प्रमेयादिस्वभावः । सा च रसना न कारकव्यापारः । स्वयन्तु नाप्रामाणिकी, स्वसंवेदनसिद्धत्वात् । रसना च बोधरूपैव किन्तु बोधान्तरेभ्यो लौकिकेभ्यो विलक्षणा, उपायानां विभावानां लौकिकवैलक्षण्या"दिति ।

वासनाऽन्तर्लीनस्यैव रत्यादे रसत्वेन स्फुरणम् इति विश्रान्तो विवादः(१)। एषाञ्च पक्षाणामुत्तरोत्तरबलीयस्तया नासङ्गतः क्रमोपन्यासः, पूर्वेषां निराकार्यत्वञ्च, 'व्यक्तः स तै'रित्यादि सूत्रयता सूत्रकृता ध्वनिदर्शनरहस्याविष्कर्त्तरि च श्रीमदाचार्याभिनवगुप्तपादा इति गुरुगौरवं दर्शयता च वृत्तिकृता सूत्रितं

(१) अभिनवभारत्यां भट्टनायकमतस्येत्थं विमर्शः साधितः- 'प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इति न विद्मः। रसनेति चेत्, साऽपि प्रतिपत्तिरेव, केवलमुपायवैलक्षण्यान्नामान्तरं प्रतिपद्यतां, दर्शनानुमितिश्रुत्युपमितिप्रतिभानादिनामान्तरवत्। निष्पादनाभिव्यक्ति(पक्ष)द्वयानभ्युपगमे च नित्यो वाऽसन्वा रस इति तृतीया गतिः स्यात्। न चाप्रतीतं वस्त्वस्ति व्यवहारे योग्यम्। अथोच्यते, प्रतीतिरस्य भोगीकरणं, तच्च रत्यादिस्वरूपम्। तदस्तु, तथापि न तावन्मात्रम्। सत्त्वादिगुणानां चाङ्गाङ्गिवैचित्र्यमनन्तं कल्प्यमिति का त्रित्वेनेयत्ता?......यत् "काव्येन भाव्यन्ते रसा" इत्युच्यते तत्र विभावादिजनितचर्वणाऽऽत्मकास्वादरूपप्रत्ययगोचरताऽऽपा(द)नमेव यदि भावनं तदभ्युपगम्यत एवे"ति। वस्तुतस्तु "आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते" इति वदता भट्टनायकेन "काव्यार्थो रस" इति स्वीकुर्वतोऽभिनवगुप्तस्य न महान्मतभेदः। परं भट्टनायकेन 'काव्ये व्यापारस्य प्राधान्यं प्रतिपादितं, ध्वनिकारादिसरणिमनुसरताऽभिनवगुप्तेन व्यापारसिद्धवस्तुनो व्यङ्ग्यरूपस्य रसस्य विश्रान्तिधामत्वादात्मत्वं सिद्धान्तित'मित्येव भेदः। सूक्ष्मदृशा "आस्वादजीवातुः पदसन्दर्भः काव्य"मिति "वाक्यं रसात्मकं काव्य"मिति च निर्दिशतोश्चण्डीदासविश्वनाथयोरालङ्कारिकवर्ययोरेष एव पारमार्थिको भेद इत्यास्तां विस्तरः।

लोके प्रमदाऽऽदिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्य्यैं,-ममैवैते, शत्रोरेवैते, तटस्थस्यैवेते, न ममैवैते, न शत्रोरेवैते,न तटस्थस्यैवेते,इति सम्बन्धविशेषस्वीकार-

---

मन्तव्यम्(१)।

सम्प्रति स्वमतमाह—लोक इति । स्थायी यावज्जीवमविच्छेद्यवासनो रत्यादिः। तदनुमाने अभ्यासेन पाटवं प्रकर्ष इति व्याप्त्याद्यनुसन्धानविलम्बाभावसूचनम् । भावकवासनाऽऽत्मभूतस्य रत्यादेर्विशेषेण भावनमास्वादाङ्कुरणयोग्यतानयनं विभावनम् । आदिपदेनानु समनन्तरमेव भावनं तथाभूतस्यैव रत्यादे रसादिरूपतयाऽनुभावनं, सम्यक्चारणम् अतथाभूतस्यैव तथाभावपरिणतिनयनं सञ्चारणञ्च गृह्यते । व्यापारेत्यतः पूर्वमलौकिकेति शेषः । सम्बन्धेन बोध्यो विशेषः प्रतिनियतपुरुषगतत्वलक्षणः सम्बन्धविशेषः, तस्य स्वीकारपरिहारानियमो नियमेन भावाभावाङ्गीकारस्तस्यानध्यवसायादनिश्चयादिति साधारण्यप्रतीतिस्वरूपकथनम्। पञ्चम्युपपत्तिस्तु अनध्यवसायपदस्यानुव्यवसायज्ञानवाचकताविरहेण

---

(१) आचार्य्याभिनवगुप्तपादमतमेव स्वमतमिति च पादा इति बहुवचनप्रयोगेण सूचितम्। "सर्वस्वन्तु रसस्यात्र गुप्तपादा हि जानते" इति माणिक्यचन्द्रसंग्रहश्लोकस्तदेवानुवक्ति ।

परिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः, सामाजिकानां वासनाऽऽत्मतया स्थितः, स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणो-

---

निश्चयाभावमात्रपरत्वाङ्गीकृत्या(१) । यद्वा प्रतीतैरित्यत इति व्यवहार्यैरिति शेषः । अभिव्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतः । स्थायीति–तस्यामेव हि दशायां प्रत्यभिज्ञायमानं लौकिकदशाप्रसिद्धं स्थैर्यमाश्रित्य स्थायिपदप्रयोगो मुख्यः । अन्यथा रतिहासादिमात्रस्य स्थायित्वे हासक्रोधादीनां शृङ्गारादौ सञ्चारिता न स्यात् । तदुक्तं "रसावस्थः परं भावः स्थायितां प्रतिपद्यत"इति । नियतेति–वासनायाः समानाधिकरणास्वादाविर्भावकत्वात्, अन्यथा नाट्यमण्डपस्थितजरन्मीमांसकश्रोत्रियवैयाकरणवाहीकादिष्वपि प्रसङ्गात्(२) । साधारणोपायेति वि-

---

(१) नीलतद्धियोरभेदरूपस्य दार्शनिकैर्निरुक्तस्यानुव्यवसायस्यो नात्र ग्रहणमिति टीकाकृत्। प्रथमकल्पे रसनिष्पत्तौ विशिष्टपुरुषसंपृक्तताऽपास्ता—इयमेव साधारणीकृतिरिति व्यपदिष्टा। द्वितीयकल्पे 'रसाः प्रतीयन्त' इत्यादिष्विव प्रतीतिपदस्य पारिभाषिकेऽर्थे प्रयोगः । व्यञ्जनागम्यैरिति विशेषनिर्देशः ।

(२) वाहीकानामरसिकत्वे तद्गतबुद्ध्यभाव एव निदानम् । श्रोत्रियवैयाकरणानान्तु वेदाद्यभ्यासजडत्वेन विषयपराङ्मुखतया वारसिककक्षायामन्तर्भुक्तिः । धर्मदत्तपद्यं "सवासनानां सभ्यानां रसस्यास्वादनं भवेत् । निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः॥" एतदेव प्रमाणयति ।

पायबलात तत्कालविगलितपरिमितप्रमातृभाववशो-न्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार

शेषणप्रधानं द्रष्टव्यम् । उपायानां विभावादीनां साधारण्यं सम्बन्धनियमभावाभावानवसायस्तद्बलात् । तत्कालेति—अत्रापि विशेषणं प्रधानं, परिमितस्य नियताधिष्ठानस्य प्रमातृभावस्य तस्मिन्काले यद्विगलनं स्वसंवेदनं तद्वशेनोन्मिषितोऽभिमान-विषयीकृतो वेद्यान्तरसम्पर्कशून्यो विषयान्तरव्यासङ्गेनाविच्छिन्न-प्रवाहः अपरिमितः साधारणो भावः स्वपदप्रवृत्तिनिमित्तं प्रमा(१) यस्य तेन। अत्र यद्यप्यपरिमित्यमात्रस्यानभिमन्यमानत्वं, प्रमाया वास्तवत्वा,त्तथापि तद्विशिष्टायामभिमन्यमानतोक्तिः । नचैत-दपि वास्तवमपरिमित्वाभिमानविषयत्वं प्रमाया इति परिमित्या-संवेदनमवगृह्य परिमित्याभिमान उच्यते, अभिमानस्य तत्काल-मसंवेदनादसंविदितत्वाद्युपपत्तौ प्रमाणाभावात् । किञ्चाभि-मानस्य रसप्रत्ययनिवेशे तदप्रमात्वापातः। तदभावे च तत्कालीन-ताविरहः । न च पूर्वः पश्चाद्वा भवन्नभिमानस्तदुपयोगी। एतच्च प्राचीनप्रणयानुरोधिना ग्रन्थकृता कण्ठतो नोक्तं, प्रमात्रेति वेद्यान्तरेति च वदता सूचितमेव(२) । संवाद

(१) 'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावन'मिति निरुक्त-लक्षणः पदार्थ इति वा। अत्र तद्भावभावनं नाम तन्मयत्वेनावस्थान-मित्यभियुक्ताः ।

(२) प्राचीननये रसादौ ज्ञानतादात्म्यस्य स्फुटमनपलापात्, नव्य-

इवाभिन्नोऽपि गोचरीकृत,श्चर्व्यमाणतैकप्राणो, विभावा-

---

ऐकरूप्यम्, तद्वाजा तत्कर्त्री पूर्वोक्तपरिमितप्रमातृताऽनध्यवसायरूपेण । साधारण्येनेति—फलसम्बन्धप्रकटनाय पुनरुक्तिः । अन्यथा हि रत्यादीनां स्वगततया प्रतीतौ व्रीडाऽऽतङ्कादिः, परगततया च दूरस्थता स्यात्, न चमत्कारोद्रेकः(१) । एवं साधारण्यप्रतीतावपि साधारणनटादिप्रतीतिवत्(१)(२) । स्वाकार इवेति—अहं वेद्मीतिवद् ज्ञातृज्ञानभेदोल्लेखाभावाद् गोचरीकृतः । यथा दीपोऽनन्तरं स्वगोचरं घटादि प्रकाशयति तथा स्वयमेव प्रकाशितः । यद्वा चिदानन्दमयोऽयं पुरुष इति वेदान्तनयेऽभिन्नोऽपि स्वयमेव प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः समुल्लिखितः । चर्व्यमाणताऽऽस्वादनं तदेवैकः प्राणो जीवः स्वरूपमस्येति चर्व्यमाणैकप्राणस्त-

---

मते "प्रमाणं चर्वणैवास्य स्वाभिन्ने विदुषां मत"मित्यादिरीत्या भगवत्या अनुभूतिशक्तेः सर्वाभिभावकत्वस्वीकाराच्च टीकाकृतामेवं साटोपमाशयाविष्कारः । "आम्नायसिद्धे किमपूर्वमेतत्संविद्विकाशेऽधिगतागमित्वम् । इत्थं स्वयंग्राह्यमहार्हहेतुद्वन्द्वेन किं दूषयिता न लोक"इत्यादि रसतत्त्वाविष्कारिकाऽभिनवभणितिरलौकिकमभिनवस्वरूपमेनमुद्घाटयति ।

( १ ) सम्बन्धविशेषेति सम्बद्धपदे प्राक् सकलसहृदयसंवादभाजा साधारण्येनेति पश्चात्साकल्येनेति द्विधैव साधारण्येनेति पदस्य प्रयोगः । टीकायामत्र मूलस्थितानां पदानां यथाक्रमं व्याख्यायन्न सर्वत्र विहिता तत्र बोधवैशद्यप्रयास एव हेतुः । सम्बन्धोति क्वचित् पाठः ।

( २ ) अत्र टीकायां किञ्चित् गलितं स्यात् ।

द्दिजीवितावधिः, पानकरसन्यायेन चर्व्यमाणः, पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्,

---

द्वहिरसन्नित्यर्थः। विभावादिजीवितावधिस्तदाकारसंवलितप्रतीति-मयत्वात्तदुपाधानतिरोधानेनोपाधेयतिरोधेयस्वरूपः। पानकेति-तत्र यथा कर्पूरमरिचादिरसाः सम्मिलिता युगपदास्वाद्यन्ते तथाऽत्रापि विभावादिभावानामेकताप्रतीतिः। एतच्चाकाराणां बाध्यसजातीयताप्रत्यभिज्ञानात्। वस्तुतस्त्वखण्ड एवायं, वेदान्तप्रसिद्धब्रह्मतत्त्ववत्(१)। चर्व्यमाण आस्वाद्यमानः। काल्पनिकमास्वाद्यास्वादयोर्भेदकथनम्। कर्मकर्तरि वा प्रत्ययः। (२)पुर इवेत्यादाविवशब्दानां क्रियाभिरन्वयः। सर्वाङ्गीणमिति-

---

(१) 'परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्य' इति ग्रन्थस्यास्योद्धारः साहित्यदर्पणे। अखण्डस्य नामप्रपञ्चरहितस्य ब्रह्मणो ज्ञानं यथा खण्डशः समुल्लसितैर्मायाविजृम्भितैर्घटपटादिकल्पितसत्ताकैः पदार्थचक्रैः साहचर्येण सम्पद्यते, तथा तत्त्वत एकस्य समग्रस्य रसस्य खण्डशः कल्पितैर्विभावादिव्यपदेश्यैः सुखदुःखजननशक्तियुतैर्विषयसामग्रीवशोन्मिषितैरुपपद्यते, आस्वादक्रमबोधसौकर्यार्थं प्रेक्षकाणां सहृदयानां भावकानां च।

(२) अत्रादर्शपुस्तके द्वित्राणि पत्राणि पत्राङ्कगणनायां प्रमादित्वापातादतितरां विपर्यस्तानि यद्धेतुकश्चतुर्थोल्लासटीकाग्रन्थेऽत्र दशमोल्लासटीकांऽशस्य गर्भीकारः। अस्माभिर्यथामति मूलग्रन्थसन्दर्भक्रममालोचयद्भिः कथञ्चिदनवद्यप्रायोऽयं पाठक्रमो निरधारि। परं द्वितीयपुस्तकस्याप्यलाभाच्चतुर्थोल्लासस्थस्यास्य टीकांऽशस्य विशुद्धिविषये न वयं तथा निःसन्दिग्धा यथा व्यत्यस्तदशमोल्लासस्य क्रम-

अन्यत्सर्वमिव तिरोदधद्, ब्रह्मास्वादमिवानुभावयन्, अलौकिकचमत्कारकारी शृङ्गारादिको रसः ।

स च न कार्यः, विभावादिविनाशेऽपि तस्य सम्भव·

---

सर्वाङ्गव्यापनं यथा स्यादित्यर्थः । एतच्च सर्वमलौकिकत्ववचनायानूदितम् । चमत्कारेति—अतिशयोक्तिरूपकाव्यपरिशीलना(१)ज्जवति हि विस्मयापरपर्यायश्चमत्कारः सर्वरसप्राणभूतः । तस्य रागाद्यङ्गप्रवणत्वेन यथायथं शृङ्गारादिव्यवहारः, तदभावे त्वद्भुतव्यपदेशः- इत्यस्मत्पितामहश्रीमन्नारायणपादैस्त्रिकलिङ्गेन्द्रश्रीनृसिंहदेवचक्रवर्तिगोष्ठीगारिष्ठानां पुरतो धर्मदत्तमहाकविः स्थगितः । कारीति—काल्पनिकभेदात् । शृङ्गारादिक इति-वासनोद्धाररूपः स एव सर्वो रसः । वासनायास्तु रत्याद्यनुरोधावान्तरवैषम्यात् शृङ्गारादिपदविशेषलाभः ।

एवं सिद्धान्तसारं संगृह्य तत्रावान्तरविप्रतिपत्तीर्निराकर्त्तुमाह—स चेति । कार्यत्वे हि विभावादिज्ञानजन्य एव वाच्यः । तथा

---

रूपविषये । दशमोल्लासस्य द्वितीयपुस्तकासादनेन सम्पादनसौकर्यं परं जातम् ।

( १ ) इयमतिशयोक्तिर्वक्रोक्तिरिति प्रसिद्धापरपर्याया "सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते । यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विने"ति भामहभणित्योपदिष्टमाहात्म्या "अलङ्कारान्तराणामप्येकमाहुः परायणम् । वागीशमहितामुक्तिमिमामतिशयाह्वया'मित्याचार्यदण्डिघोषितसामर्थ्या सर्वालङ्कारजीवातुरत्रोद्दिष्टा टीकाकृता ।

प्रसङ्गात् । नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवात् । अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः । कारकज्ञापकाभ्या-

---

ष सति विभावादिज्ञानस्य विनाशेऽभावेऽपि तस्य रसस्य सम्भवाप्रसङ्गः । नह्यवश्यं कारणावभासकाल एव कार्यावभासकालः, न चैवं रसे, तस्य विभावादिसमूहालम्बनशरीरत्वात् । अपि च कार्यं स्वकारणैः सह नैकस्यां संविद्यवभासमानं दृष्टम् । एतच्च सुखं विभावादिसंवलितं भासते । तस्मान्न कार्यम् । न ज्ञाप्यो ज्ञानविषयः । सिद्धस्य प्रतीतेर्बहिरिति शेषः । किन्तर्हि तत्सद्भावे प्रमाणमित्याह—अपि त्विति । चर्वणैव भगवती(१)स्वसंविदितस्वरूपा स्वाभिन्ने तस्मिन्प्रमाणमिति भावः । व्यञ्जित इति चर्वणीय इति च व्यक्त इति चर्व्यमाण इतिवद्व्याख्येयम् । विभावादिभिर्व्यञ्जित इत्यन्ये । विभावादेस्तत्र हेतुत्वमाविष्कृतं, न चासौ कारकज्ञापकरूपः, तस्याकार्याज्ञाप्यरूपत्वात् । नच तदुभयभावो हेतुत्वं निवर्तयितुमीष्टे 'निर्विशेषं न सामान्य'मिति(२) न्यायात् , इत्याह—कारकेति । यद्यपि ज्ञापकस्य न वास्तवं हेतुत्वं तस्य ज्ञानं प्रति हेतुत्वात् , ज्ञापनस्य विषयस्वरूपातिरिक्तत्वात् ,

---

(१) वेदान्तनये प्रकटितकीर्त्तिरघटनघटनपटीयसी भगवती मायेव चर्वणैव सर्वशक्तिमती रसाभिव्यक्तौ सहायाऽत्रैवं स्मर्यते ।

(२) कारकज्ञापकाभ्यां विलक्षणे व्यञ्जकरूपे सामान्ये स्वसंवेदनसिद्धस्यालौकिकस्य रसपदार्थस्यान्तर्भावः । अलौकिकत्वमुद्दिश्यान्यत्रोक्तम् "विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते । इयमेवात्मसंवित्तिरस्पर्शा जडरूपता" ॥ इति ।

मन्यत् क्व दृष्टमिति चेत्-न क्वचिद् दृष्टम्, इत्यलौकिकत्व-(१)सिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षा-

---

तथापि वैशेषिकादिभिर्ज्ञापकस्य धूमादेर्वह्निं प्रति हेतुत्वं व्यवह्रियत इति तदुपन्यासः। अन्यदिति-विवक्षितं, यदालिङ्ग्य हेतुत्वसामान्यं व्यवतिष्ठेतेति भावः। न दूषणमिति—न खल्वन्यत्रादर्शनमात्रेण वस्तुस्वरूपमपह्नूयते। माभूत्कारकत्वज्ञापकत्वे कारकज्ञापकाभ्यामन्यत्रादृष्टे इति तत्स्वरूपापहारः, तस्मादस्ति कश्चिद्विशेषो भावनत्वरसनत्वाख्यो, यं क्रोडे निधाय विभावादौ हेतुत्वसामान्यं निविशत इति सन्तोष्टव्यम्। सम्प्रति रसे कार्यत्वज्ञाप्यत्वव्यवहारं कथञ्चिन्निर्वाहयति—चर्वणेति। यद्यपि रसानन्यतया चर्वणाऽपि न कार्या तथाऽपि कादाचित्कतया तत्कार्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपेत्यादिभागेऽपि तथा व्यवहार इति भावः(२)। लौकिकं प्रत्यक्षादिरूपं

---

(१) इत्यलौकिकसिद्धेरिति वा पाठः।

(२) एवमभिनवभारत्यां "तर्हि लौकिकचित्तवृत्त्यनुमाने का रसता?.........अलौकिकचमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेदनविलक्षण एव। तथाहि लौकिकेनानुमानेन संस्कृतः (?) प्रमदाऽऽदिना ताटस्थ्येन[न]प्रतिपद्यते, अपि तु हृदयसंवादात्मकसहृदयत्वबलात्पूर्णीभवद्रसास्वादाङ्कुरीभावेनानुमानस्मृत्यादिसोपानमनारुह्यैव तन्मयीभावोचितचर्वणाप्राणतया।.........किञ्च लौकिकविभावादिसंयोगबलोपनतैवेयं चर्वणा। सा च प्रत्यक्षानुमानागमोप-

द्विप्रमाणताटस्थ्यावबोधशालिपरिमितयोगिज्ञानवेद्या(१)

यत्प्रमाणं तद्विलक्षणभाव एव संवित्तिः, तस्य पारिमित्यादिसम्बन्धपुरस्कारात्स्वात्ममात्रविश्रान्त्यभावाच्च । परिमितं परिमितविषयमाध्यासिकदशायां योगिनो ध्यानप्रतिपन्नमुक्त्यात्मगततया जन्यं यदसन्निहितवस्तुज्ञानं तच्चाटस्थ्येनौदासीन्येन । अवबोधो विषयप्रकाशः । शालिपदमत्र स्वरूपपरम् । न चैवं रसः, तथा सत्यरस्यताऽऽपत्तेरित्युक्तत्वात् । विमुक्तदशायां शुकादीनां ज्ञानं परिमितेतरसर्वविषयम् । न चैवं रसः । जीवन्मुक्त-

---

मानादिलौकिकप्रमाणजनितरत्याद्यवबोधतस्तथा योगिप्रत्यक्षजतटस्थपरसंवित्तिज्ञानात्सकलवैषयिकोपरागशून्यशुद्धपरयोगिगतस्वानन्दैकघनानुभवाच्च विशिष्यते ।"' अत एव विभावादयो न निष्पत्तिहेतवो रसस्य, तद्बोधापगमेऽपि रससम्भवप्रसङ्गात् । नापि ज्ञप्तिहेतवो, येन प्रमाणमध्ये पतेयुः, सिद्धस्य कस्यचित्प्रमेयभूतस्य रसस्याभावात् । किं तर्हि एते विभावादय इति । अलौकिक एवायं चर्वणोपयोगि विभावादिव्यवहारः ।...नन्वेवं रसोऽप्रमेयः स्यात् ?...रस्यतैकप्राणो ह्यसौ, न प्रमेयादिस्वभावः । तर्हि सूत्रे निष्पत्तिरिति कथं नेयम् ? रसस्यापि तु तद्विषयरसनायास्तस्मान्निष्पत्त्या तु यदि तदेकायत्तजीवितस्य रसस्य निष्पत्तिः ? उच्यते–न कश्चिदत्र दोषः । सा च रसना न प्रमाणव्यापारो न वा कारकव्यापारः । स्वयन्तु नाप्रामाणिकी स्वसंवेदनसिद्धत्वात्"।......"अतएवोभयदेशकालत्यागो (?) रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टास्तत्रापि लौकिकदेशकाला नियमेन तत्र रतिं गमयन्ति यस्यां स्वात्माऽपि तद्वासनावश्वादनुप्रविष्टः । अत एव न तटस्थतया रत्यवगमो न च नियतकारणतया..." इत्यादि ।

(१) शालिमितेति क्वचित् पाठः ।

न्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्। तद्ग्राहकं च न निर्विकल्पकं, विभावादिपरामर्शनप्रधानत्वात्(१)। नापि सविकल्पकं, चर्व्य-

---

दशायान्तु शुकादीनामेव ज्ञानं चिदानन्दमयनिष्प्रपञ्चस्वात्ममात्रविश्रान्तम्, अतएव वेद्यान्तरसंस्पर्शरहितं रागादिसम्भेदशून्यम्। न चैवं प्रकृते रत्यादि, तत्कारणादिसम्भेदस्यानुभूयमानत्वात्। विलक्षणेत्युक्तरीत्या सर्वत्रान्वीयते। अत एव लोकोत्तरं निखिलज्ञानभिन्नाकारं स्वसंवेदनं स्वप्रकाशस्तद्गोचरस्तच्छरीरान्तर्गततया तत्प्रकाशेनैव प्रकाशितो रतिसुखादिभागिति प्रत्येयोऽप्यपरोक्षव्यवहारत्वेनोच्यताम्। तद्ग्राहकं चेति—स चासौ ग्राहकश्चेति तद्ग्राहकम्(१)। निर्विकल्पकमिन्द्रियापेतं नामजात्यादिवैशिष्ट्यशून्यस्वलक्षणावभासम्। विभावादीनामसन्निहितानां परामर्शनमनुसन्धानम्। तत्प्रधानत्वात्तद्धेतुत्वात्। सविकल्पकं हीन्द्रियसम्बन्धमात्रग्राहि विकल्पविशिष्टं ज्ञानम्। चर्व्यमाणस्य चर्वणामात्रप्राणस्य

---

(१) एवं श्रीधरचण्डीदासादीनां टीकासु पाठः। परामर्शेति वैकल्पिकः पाठः।

(१) अत्र षष्ठीसमास एव बहुतरसम्मतः, परमास्वादशरीरातिरिक्तो रसो नास्ति, आस्वादश्च विभावादिपरामर्शमय इति टीकाकृन्मतनिर्यासे सुस्थिते रूपककर्मधारयं विना गत्यन्तरं नास्तीति कृतस्तत्र निर्बन्धष्टीकाकृता। यद्वा राहुशिर इतिवत् समासः।

माणस्यालौकिकानन्दमयस्य स्वसंवेदनमात्रसिद्धत्वात्। उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोको·

---

स्वसंवेदनमात्र(२)-सिद्धत्वादपरिस्फुटविभावादिप्रकाशतयेति शेषः। आकाराणां (२)स्फुटाभासे रसनं न स्यात्, असाधारण्यात्रभासात्। यत्तु 'स्वात्मन्यविकल्प इति न्याया'दिति श्रीधरेणोक्तं (३)तन्न युक्तं, प्रकाशमात्रे निर्विकल्पकत्वस्यांशान्तरे च वि·

---

( २ ) स्वसंवेदनसिद्धत्वादिति प्रचलितः पाठः। सौगतादिनये स्वसंवेदनसिद्धत्वं ज्ञानमात्रस्योट्टङ्कितम्। ( श्रीधरकृतकाव्यप्रकाश· विवेके त्वस्य विस्तरतो विचारः कृतः। ) अतः स्वसंवेदनसिद्धत्वा· द्विकल्पज्ञानमपि न रसस्य ग्राहकमिति स्थितम्।

( २ ) आकाराणां लौकिकवस्तूनामिति पारिभाषिकेऽर्थे प्रयोगः, विभावादीनामित्यस्य प्रकृतेऽर्थः। 'विभावादिपरामर्शो हि शब्दनस्वभावो विकल्पकक्षां नातिक्रामति-तत्प्राधान्याच्च निर्विकल्पकम्।" 'यदि रसः······सविकल्पेन गृह्यते तस्य लोकोत्तराह्लादरूपत्वं न स्यात्, लोकयात्रापथप्रविष्टत्वाद्विकल्पस्य। स्वसंवेदनसिद्धता च तस्य विघटेत, विकल्पाधीनस्यार्थस्य परसंवेदनेनापि साध्यत्वा'दिति भट्टगोपालः।

( ३ ) "ननु सर्वज्ञानानां स्वसंवेदनप्रत्यक्षत्वे घटोऽयमित्यादिविकल्पज्ञानस्य निर्विकल्पत्वं, पीतशङ्खादिज्ञानस्याभ्रान्तत्वञ्च स्यात्-उच्यते विकल्पज्ञानमपि स्वात्मनि निर्विकल्पकमेव, घटोऽयमित्यनेन बाह्यसत्त्वं विकल्पयति, न त्वात्मानम्।······असद्विषयश्चात्र भ्रान्तिरूच्यते यदुक्तं 'स्वरूपे सर्वमभ्रान्तं पररूपे विपर्ययः'।··········· यद्यमी प्रकाशन्ते तदा स्वहेतोरेव प्रकाशस्वभावा उपपन्ना सन्तः प्रकाशन्त इति स्वीकर्तव्यमेवे'ति श्रीधरकृते काव्यप्रकाशविवेके स्थितम्।

त्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः ॥

---

कल्पस्य प्रसङ्गात्। यदि त्वेकरूपतया परिहारस्तदा विकल्पत्वे सत्येव स्वात्मवन्निर्विकल्पकत्वं स्यात् । एतच्चोभयमङ्गीकुर्वतामुपनीय वाससि बद्धो ग्रन्थिः। अविकल्पकतावादश्च पूर्वग्रन्थावयवविरुद्धः। उभयस्य निर्विकल्पकत्वस्य सविकल्पकत्वस्य चाभावो यत्र तदुभयाभावं, तथाभूतं स्वरूपं यस्येति विग्रहः । उभयात्मकत्वं निर्विकल्पात्मकत्वाभावेन सविकल्पात्मकत्वं सविकल्पकत्वाभावेन च निर्विकल्पात्मकत्वमुपचरितमित्यर्थः । पूर्ववत्कार्यत्वज्ञाप्यत्वविरहवत् । लोकोत्तरतां लौकिकयौगिकसकलसंविद्विलक्षणताम् । न तु विरोधमिति–तथाभूततयैव प्रमाणेनानुभावात्, अनुभावस्य चाबाध्यत्वात्(१)। तदुक्तं खण्डनकृता—

अन्यथाऽनुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥
वाच्याऽन्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः ।
नह्येकत्रसमावेशश्छायाऽऽतपवदेतयोः ॥ (२)

श्रीमदिति काव्यार्थतत्त्वज्ञानसम्पत्तिः । आचार्य्यपदेन सम्प्रदायप्रवर्त्तकता । पादा इति गुरुगौरवमुच्यते(३) ।

---

( १ ) यदाहुः "युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कये"ति ।

( २ ) खण्डनखण्डखाद्यम् (चौखम्बा संस्कृत सिरिज १२३पृः) ।

( ३ ) अथवा पादा इति स्वस्य तत्सम्प्रदायानुवर्तित्वमित्यर्थः ।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुत-

---

अत्र केचिद्विभावमात्रस्य केचित्सञ्चारिमात्रस्य प्रतीत्या रसनिष्पत्तिमाहुः, वियदित्यादिषु तथा दर्शनात्(१)। यत्र च सर्वसान्निध्यं तत्र यस्योत्कटतया प्रतीतिस्तत्प्रतीतिरेव रसबीजं, शेषस्तु वर्जनीयसन्निधिरेवेति ये मन्यन्ते तान्सर्वान्प्रत्याह(२) -व्याघ्रा-

---

वस्तुतस्त्वाचार्यपादानामियं विवृतिर्नव्यतान्त्रिकाणामालङ्कारिकाणां रसनिष्पत्तिव्याख्याने भित्तित्वेन परिकल्पिता। परम् "इति" इत्यन्तेन परामृष्टो मूलस्थसन्दर्भः सामग्र्येण स्वरूपेण यथोद्दिष्टक्रमेण चाभिनवभारत्यां ध्वन्यालोकलोचने वा नोपलभ्यते। शिष्यस्थानीयैर्मम्मटभट्टैराचार्यवर्यस्य मतं तत्प्रणाल्या परिपाठ्या संगृहीतमथवा स्मृतितस्तत्प्रसक्तोऽंश उदुध्रियत तैरिति प्रतीयते।

(१) नायमाक्षेपस्तावत् सूत्रकृदनन्तरभाविनो वृत्तिकारात् पूर्वतनान् वृत्तिग्रन्थतात्पर्यग्रहणविमुखान् वा कटाक्षयितुं सोपयोग इति टीकाकृत्स्वरसः। परमार्थतस्तु सूत्रवृत्त्युदाहरणैः समग्र एको ह्ययं ग्रन्थ इति प्रागेवास्माभिः सूचितम्। परमासन् केचनातिप्राचीना रसशास्त्रोपदेष्टारो यैर्विभावमात्राश्रयस्य सञ्चारिमात्रादेर्वा रसत्वेन स्वीकारो व्यधायि। एषां मन्तव्यमाभासतया क्वचित् क्वचित् भावप्रकाशादिसंग्रहग्रन्थेषूपलभ्यते। एतन्मते विभावादेर्यस्य कस्यचित् सद्भावे रसप्रतीतिरनिवार्या, द्विकसद्भावे तस्या उत्कर्षः, त्रिकसद्भावे तु श्रेष्ठता तस्याः। एतानेव लक्ष्यीकृत्य वृत्तिग्रन्थे वियदादिपद्येषु रसनिष्पत्तिसामग्रीचर्चाऽवतारिता।

(२) विभावादीनां लौकिकतयोद्दिष्टानां समवेततया कार्यकारित्वादेव रसनिष्पत्तिः, न तु यस्य कस्यचिदेकस्य द्विकस्य वा। पानक-

रौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुण-भयानकयोः, चिन्ताऽऽदयो व्यभिचारिणः शृङ्गारस्येव वीर-करुण-भयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः ।

वियदलिमलिनाम्बुगर्भमेघं
मधुकरकोकिलकूजितैर्दिशां श्रीः ।

दय इत्यादि । एते हि यथा भीरूणां भयं तथा वीराणामुत्साहमपूर्वदर्शिनामाश्चर्यं, पुत्रादिव्यापादने च शोकं(१) जनयन्तीति काव्यनिबद्धानामेषां प्रतीत्या कस्य रसस्याभिव्यक्तिर्निगम्यतां, तस्मात्सहकारिसमवधानरूपया सामग्र्यैव नियन्तुं शक्यम् । सा च विभावादित्रयमिलनरूपमेव । एवमुत्तरयोरपि वेदितव्यम् । पृथगेकैकशः । अनैकान्तिकत्वादेकस्मिन्नन्ते पक्षेऽनियतत्वात् । सूत्रे भारतीये । मिलिताः सर्वप्रधानद्वन्द्वेऽस्मदीये च सूत्रे समानतया निर्दिष्टाः । एतेन क्वचित्कस्यचिदुद्भटत्वमपि स्वात्मदार्ढ्यमेव धत्ते, न तु परशक्तिव्युदासम् । एषूदाहरणेषु तदा का गतिरित्याह—वियदिति । अलिमलिना अम्बुगर्भाश्च मेघा यत्रेति विग्रहः । मधुकरा एव कोकिलाः—तथा च यथा वसन्ते

रसन्यायेन समवाये इतरेषां नियमेन स्फुटानवभासेऽपि तत्सिद्धिरिति हि रसतत्त्वविदां राद्धान्तः । आपाततो यस्य कस्यचिदसन्निधौ तु नैतत्सर्वमफलं भवति यतः "सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् । झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते" ॥

(१) क्रोधमित्यादर्शपुस्तकेऽसंलग्नप्रायः पाठः । वस्तुतस्तु व्यापादने चेत्यादिरंशोऽपि नातितरां समञ्जसः ।

धरणिरभिनवाङ्कुराङ्कटङ्का
प्रणतिपरे दयिते प्रसीद मुग्धे! ॥ २७ ॥

इत्यादौ,

परिमृदितमृणालीम्लानमङ्गं, प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २८ ॥

इत्यादौ,

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।

---

कोकिलैर्दिशां काऽपि लक्ष्मीस्तथा सम्प्रति मधुकरैर्मदत्वेन (मदमत्तत्वेन) मेदुरध्वनिभिरित्येकः (समाधानोपायः), क्वचन क्वचन केऽपि कोकिलाः प्रावृष्यपि माद्यन्तीत्यपरः । पाषाणप्रायः कठोर-प्रदेशष्टङ्कः । प्रणतिपर इति विषयसप्तमी । अत्र मुग्धा प्रणतिपरश्च कान्तः परस्परमालम्बनं, गगनादयस्तूद्दीपनं, सामर्थ्यावसेयाश्चा-वहित्थावेगादयः सञ्चारिणः, रोमाञ्चस्तम्भकाकुयाञ्चाऽऽदय-श्चानुभावाः । परीति-क्रियासु स्वशरीरधारणमात्रोपयोगिनीषु । अत्रानुभवैर्निद्राहानादिभिर्निर्वेदचिन्ताऽऽदयो व्यभिचारिण आ-क्षिप्यन्ते । आलम्बनस्य तु मालतीं प्रति जीवितसर्वस्वायमानस्य माधवस्य, उद्दीपनानाञ्च तद्गुणश्रवणादीनां प्रकरणादवगतिः । दूरादिति-त्रिवलनेन लज्जा, स्फारणेन हर्षः, आरुण्येन कोपः,

मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥२९॥

इत्यादौ च,

यद्यपि विभावानामनुभावानामौत्सुक्य-व्रीडा-हर्ष-कोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः, तथाऽप्येतेषामसाधारणत्वमित्यन्यतमद्वया-

---

भ्रूलताकौटिल्येन कोपस्यैव प्रकर्षकत्वलक्षणाऽसूया । चरणानत्या व्यतिकरः संसर्गोऽस्येति समासः । बाष्पेति-त्वयाऽप्येवं विषमविप्रियं कृतं, मयाऽतिकठिनयैतावत्पर्यन्तं सोढुमित्यनुतापः । ईक्षणं दर्शनम् । प्रपञ्चोऽत्र व्यापारबाहुल्यं, तत्र चतुरं शिल्पवत् (?) । जातागसि प्रमादान्न तु बुद्धिपूर्वं कृतागसि, अतएव प्रेयसि(१) । केवलानामेवेति-स्फुटतयेति शेषः । असाधारणत्वमितरापेक्षया व्यक्तिशक्तिमत्त्वम्, अन्यतमस्य द्वयोरुपादानस्थले द्वयस्यैकोपादानस्थले आक्षेपकत्वेन साहचर्यनै-

---

(१) मानिन्या इति विशेषणात्तथाऽवसीयते । अत्रौत्सुक्यादीनां बहूनां व्यभिचारिणां समावेशः । "यद्यप्यत्र प्रेयसीत्यालम्बनविभावोऽप्यस्ति तथापि रत्यनुकूलधर्मवत्तयाऽनिर्देशादनस्तिकल्प एवेति । मा मैवम्, एषां विभावादीनामसाधारण्येनान्यद्वयाक्षेपकत्वेनात्रापि मिलितानामेव व्यञ्जकत्वात् । नन्वेवञ्चेदसाधारण्यं, किमन्यद्वयाक्षेपणेन, एकैकव्यभिचारेण हि त्रयोपादानम्..........अतोऽसाधारण्येऽपीतरद्वयमाक्षिप्यते" ।

क्षेपकत्वे सति नानैकान्तिकत्वमिति।

तद्विशेषानाह—

(४४)शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।

---

पत्येन नानैकान्तिकत्वं न व्यभिचारित्वमस्मदङ्गीकृतस्य सामुदायिकस्येत्यर्थः। अतो न विभावाद्येकतमानिर्वाह्यता रसस्येति।

विशिष्यन्त इति विशेषास्तस्य रसस्य सामान्यतो निर्णीतस्य विशेषाः। स्तानाहेति—प्रसक्तानुप्रसक्त्येत्यर्थः। शृङ्गारेति—परस्परजीवितसर्वस्वायमानयोरुत्तमप्रहृष्टयोर्नायकनायिकयो रतिप्रकृतिरभिलाषः पूर्वदर्शितसामान्ययोगाच्छृङ्गारः। तत्रालम्बनं नायकौ, तयोरेव लावण्ययौवनादिदेशकालविशेषादिरुद्दीपनम्, अनुभावास्तत्तन्नयनात्रिभागवीक्षणालिङ्गनादयः, सञ्चारिणश्च यथायथं सर्व एव भावाः(१)। तदुक्तम्—"एकोनपञ्चाशदमुश्च भावा युक्त्या निबद्धाः परिपोषयन्ती"ति(२)। आत्मनः परस्य वा वाग्वेशरूपचेष्टावैकृतविलोकनाच्चेतोविकाशो हासः।

---

(१) भावशब्दश्चित्तवृत्तिविशेषे रूढोऽपि रसशास्त्रनिर्दिष्टानां रत्यादीनां स्थायिनां निर्वेदादीनां त्रयस्त्रिंशतो व्यभिचारिणां स्तम्भादीनामष्टानामनुभावानां वा द्योतकतयाऽभिप्रेत इत्याशयः। यथायथमिति बुद्धिपूर्वकमुपन्यासः। एवमुत्तरत्रापि।

(२) सन्दर्भोऽयं दशरूपकीयः (४।४९ निर्णयसागर)। युक्त्या निबद्धा इति पारिभाषिकतया मतानामेषां भावानां यदृच्छया साधितोऽसङ्गतः सन्निवेशो वारितः। 'अमी हि भावा' इति मुद्रितपुस्तके पाठः। अमुश्चेति पाठे सर्वनाम्नो शृङ्गारस्य परामर्शः। एतच्चोपलक्षणमात्रम्।

तत्प्रकृती रसो हास्यं, तत्रालम्बनं विकृतवेशः पुरुषः, तच्चेष्टाऽऽदिरुद्दीपनं, नयनविकाशहस्ततालिकाऽऽदयोऽनुभावाः, सञ्चारिणश्चावहित्थाग्लानिमूर्च्छाऽऽदय इति । तत्रात्मनो यथा–गृहीततापसवेशं निर्वर्ण्य–रावणः–"जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं हारो वक्षसि यज्ञसूत्रमुचितं क्लृप्ता जटाः कुन्तलाः । रुद्राक्षः स किलैष यत्कुवलयश्रेणीनांशुकं बन्धनं सीतालोचनहारि कल्पितमहो रम्यं वपुः कामिना" ॥ शेषन्तु वृत्तिकृदुदाहरिष्यति । बन्धुवधविभवनाशजनितशोकप्रकृतिः करुणः । तत्र च पतिरमणादिरालम्बनं, भूमिपतनरोदनोरस्ताडनादिरनुभावः, ग्लानिनिर्वेदमूर्च्छामरणादिः सञ्चारी । ननु कथं करुणो रसः, तस्य शोकमयत्वात्, रसस्य च सान्द्रानन्दात्मकत्वात् । सत्यं, महाभारतादौ प्राक् पर्वाद्यनुभवे(?)तावदस्ति स्तनमर्दनगाढालिङ्गनादौ सुरताङ्ग इव सूक्ष्मपीडाऽनुवेधः, पश्चात् सान्द्रतरानन्दश्चमत्कारः स्वसंवित्तिसाक्षिकः, ततश्च कुतः करुणस्य न रसत्वम् ? अशिक्षितास्तु तत्प्रतिबद्धे भूयोभूयः स्वहृदयप्रवृत्तेर्दुःखैकमयत्वे सत्यन्यथाऽनुपपत्त्या यष्टिलग्नवदकामेनाप्यङ्गीकार्याः(१) ।

(१) रसस्यानन्दमयत्वे सहृदयानामनुभव एव चरमं प्रमाणम् । 'लये सम्बोधयेच्चित्त' मित्यादिसन्दर्भे प्राचीनैरपि ज्ञानयोगिभिः 'नास्वादयेद्रस'मित्यादिना तस्यानन्दमयत्वभूमिका स्वीकृता । अशिक्षितप्रायाणामापाततो दुःखोदयो मोहमूलक एव । "करुणादावपि रसे जायते यत्परं सुखम् । सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।" न काऽपीत्थमनुपपत्तिर्यतो "हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् । शोकहर्षादयो

एतेन क्रोधादिस्थायिनो रौद्रादयो व्याख्याताः । अपकारिणि क्रोधोद्रेकप्रकृती रौद्रः । अत्रालम्बनमपकारी, तदपकारादिरुद्दीपनं, बाह्वास्फोटशस्त्रोल्लासप्रतिद्वन्द्विप्रहादि-(१)रनुभावः, सञ्चारिणस्तु चपलतागर्वग्लानिमूर्च्छाऽऽदयः । दानयुद्धादिषूत्साहपरिपोषको वीरः । अत्रालम्बनं देययुद्धादयः, उद्दीपनं दानपात्रप्राप्तिसाम्राज्यादयः, अनुभावः सर्वस्वत्यागयात्राग्रहणादिः, सञ्चारिणो धृतिहर्षगर्वादयः । स्त्रीनीचादिगतविकृतसत्त्वादिदर्शनजनितभयस्थायी भयानकः।तत्र विकृतः सत्त्वादिरालम्बनं, तस्योच्चनादादिरुद्दीपनं, नयननिमीलनगात्रसङ्कोचपलायनादयोऽनुभावाः, सञ्चारिणस्तु जडताग्लानिमूर्च्छामरणादयः । विकृतिपूतिमांसादिदर्शनाद्विपवैरस्यभावनाच्च जुगुप्साप्रकृतिर्बीभत्सः । तस्य च पूतिमांसादिरालम्बनं, तत्रैव कृमिपातादिरुद्दीपनं, मुखविघूर्णननिष्ठीवनपराङ्मुखत्वादयो नीचेषु, उत्तमेषु तु कार्यान्तरस्य व्यासङ्गादयोऽनुभावाः, निर्वेदापस्मारजाड्यादयो व्यभिचारिणः । लोकोत्तरवस्तुप्रतिभासजनित-

लोके जायन्तां नाम लौकिकाः । अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् । सुखं सञ्जायते तेभ्यः सर्वेभ्य इति का क्षतिः ॥" प्रकृत्या दुःखसंश्लेषविद्वेषिणः सुखास्वादनसादरस्य जीवलोकस्य यद्दशरूपकादौ रामायणादिश्रव्यकाव्ये च तद्वासनोपचरितं निर्बन्धदार्ढ्यं तदप्येतन्मूलकमेवेति कथं तस्यापलापः शक्यः ?

(१) 'अस्त्रोल्लासप्रतिग्रहादिरनुभाव' इत्यादर्शपुस्तके पाठः । अत्र मुनिः—"तस्य (रौद्ररसस्य) च ताडन-पाटन-पीडन-च्छेदन-प्रहरणाहरण-शस्त्रसम्पात-रुधिराकर्षणाद्दीनि कर्माणी"ति । अत्र प्रतिद्वन्द्विग्रहपदेन मुनिनिर्दिष्टः सम्प्रहारः सूचितः स्यात् ।

बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्यरसाः(१) स्मृताः॥२९॥

तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च।

विस्मयप्रकृतिरद्भुतः। तस्य चालम्बनं महापुरुषादिः, उद्दीपनं तद्गुणातिशयः, साधुवादशिरोधूननादयो नीचेषु, सस्पृहत्वादयस्तु महत्स्वनुभावाः, उत्साहधृतिहर्षादयः सञ्चारिणः। नाट्यरसा इति—सात्त्विकबहुलगीतवाद्यादिपूर्वकाभिनयेन पुरावृत्तानुकारो नाट्यं, तदाश्रया रसा नाट्यरसाः। ते चाष्टौ मुनिना कण्ठोक्ताः(२), शान्तस्य नाट्ये तादृक्पुष्टिविरहात्। यदाह ध्वनिकारः(३)—"पुष्टिर्नाट्येषु नैतस्ये"ति। काव्यरसास्तु शृङ्गारादयोऽष्टौ शान्तश्चेति नवेति भावः। तत्र रसेषु भिद्येते वक्ष्यमाणारीत्येति भेदौ।

(१) 'नाट्ये रसा' इति वा पाठः।

(२) बरोदामुद्रितनाट्यशास्त्रपुस्तके मूले शान्तरसविवेचनात्मकः सन्दर्भस्तु (३३२-३३६ पृ०) न मुन्युपज्ञमिति नास्ति सन्देहलेशावकाशः। नचापि तद्ग्रन्थव्याख्यानपरा टीकोपलभ्यते यथा शृङ्गारादिरसस्थले। अभिनवगुप्तसंपादकृतं मूलं तत् स्यात्।

(३) एतच्च टीकाकृत्प्रमादविजृम्भितमाकरनिर्धारणम्। दशरूपके उपरितनः सन्दर्भ उपलभ्यते। तथाच स्थायिभावगणनायां तत्रत्यः कारिकाग्रन्थः—"रत्युत्साहजुगुप्साः क्रोधो हासः स्मयो भयं शोकः। शममपि केचित् प्राहुः पुष्टिर्नाट्येषु नैतस्य॥" शान्तस्य श्रव्यकाव्यपरत्वेन व्यवस्थया मूलग्रन्थसङ्गतिरियं मनोज्ञाऽपि न सर्ववादिसम्मता। तथा च सम्प्रदायप्रवर्त्तकाः श्रीमदानन्दवर्धनाभिनवगुप्तप्रभृतयः सर्व एव नाट्येऽपि शान्तमङ्गीकुर्वन्ति। एवमपरे नातिप्राचीनाः "अष्टावेव रसा नाट्य इति केचिदचूचुदन्। तदचारु यतः कञ्चिन्न रसं स्वदते नट" इति।

तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बना-द्यनन्तभेदत्वादपरिच्छेद्य एक एव गण्यते । यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥३०॥

---

संयुक्तयोरन्योन्यानुकूलयो रम्यवेशगीतनाट्यादिसेवनात्प्रकृष्यमानरतिप्रकृतिः सम्भोगः । वियुक्तयोस्तु गुणस्मरणादिना रतिपोषप्रकृतिर्विप्रलम्भः। संयोगवियोगौ चात्र परस्परायत्तताऽनायत्ततारूपौ, तेन दूतीप्रेषणादौ सम्भोगे ईर्ष्यामानादौ विप्रलम्भे नाव्याप्तिः । परितः सर्वतो गण्डादिचतुःस्थाने वदनसंयोजनविशेषो बाभ्रव्यादिप्रणीतः (१)परिचुम्बनम् । नम्रेत्यन्तं कृतकारिताऽर्थम् । तेन बालाया नमनकर्तृत्वेनालोक्येत्येककर्तृतया चोपपत्तिः । यबन्तानान्तूत्तरोत्तरतः पौर्वकाल्यम् ।

---

(१) कामशास्त्रकर्तॄणामन्यतमो बाभ्रव्यः । वात्स्यायनीयकामसूत्रेऽर्वाचीने च रतिरहस्यादिनिबन्धे चुम्बनभेदा बहवो लक्षिताः । अत्र श्रीधरः "यद्यपि भरतमतानुसारेण नाट्यरसा इत्युक्तं तथापि काव्यस्य प्राधान्यात्परिचुम्बनाद्यात्मनः सम्भोगस्य नाट्यविशेषतया साक्षात्प्रयोक्तुं मुनिनैव निषिद्धत्वात्तमुत्तमकाव्यविषयतयाऽऽख्यायमानमुदाहरति–शून्यमित्यादि ।...रतेरुभयाधिष्ठानत्वात्सम्भोगस्योभयाधिष्ठानत्वेऽपि नायिकाप्रयुक्तसम्भोगस्येदमुदाहरणं, त्वं मुग्धाक्षीत्यादिषु नायिकाप्रयुक्तस्ये"ति ।

तथा,

त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ ३१ ॥

अपरस्तु अभिलाष-विरहेर्ष्या-प्रवास-शापहेतुक

---

तत्र चोभयोरनुरागोद्रेके सत्यपि नायिकाया औत्सुक्यं स्पष्टम् । सम्प्रति नायकौत्सुक्यमुदाहरति—त्वमिति । तद्वीटिकाऽऽश्रयणं(१) सखी आलीजनस्य नायिका तस्या नेत्रोत्सव उत्फुल्लतालक्षण-स्तेनानन्दितः, सैव नेत्रोत्सव(२)इत्येके । उक्तासु वक्ष्यमाणासु चोदाहृतिषु पूर्वोक्तनयेन विभावादिविभागो रसनिष्पत्तौ भावुकै-र्बोध्यः । अस्माभिस्तु विस्तरभीत्या न प्रपञ्चितः । अपर इति-अभिलाषः सङ्गमप्रागभावः, एकदेशस्थयोरपि गुर्वादिवशात्सङ्गमो-परोधो विरहः । ईर्ष्येति मानोपलक्षणम् । तेन कुमारसम्भव-अष्टमसर्गे(३)सन्ध्यावर्णनादौ वर्णितः प्रणयमानोऽपि सं-

---

(१) प्रथनमित्यादर्शपुस्तके पाठः । अत्र कतिचित्पदान्यादर्श-पुस्तके प्रमादाद्गलितानीति प्रतीयते । अत्र वीटिकाऽऽश्रयणनिविष्टस्मित-विशेषवतीयं सखी नायिकेत्यादिः काव्यप्रकाशविवेके व्याख्यानक्रमः ।

(२) एके श्रीधरादयः । वयन्तु नोभयोर्व्याख्यानयोः कमपि वि-शेषमुत्प्रेक्षितुं समर्थाः । अतोऽरुचिसूचने न किमपि तात्पर्यं प्रेक्षामहे । सम्प्रदायप्रकाशिनीकाराः श्रीधरमेवात्रानुसरन्ति ।

(३) [४९-५२] । कुमारसम्भवाष्टमसर्ग इत्यशुद्धः पाठः क' पुस्तके ।

इति पञ्चविधः । क्रमेणोदाहरणम्(१)—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥३२॥

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्-
यो मां नेच्छति नागतश्च हह हा !(२) कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि ॥३३॥

एषा विरहोत्कण्ठिता ।

---

गृह्यते । अन्यासङ्गिनि कान्ते सानुरागप्रियाविषयः कोप ईर्ष्या । प्रवासो देशविच्छेदः । मुन्यादिक्रोधयन्त्रणं शापः । स च सर्वापवादक इत्याह—पञ्चविध इति । अभिलाष—विरह—प्रवासविषये तत्सद्भावे तेनैव व्यवहारः । क्रमेणेति—दिङ्मात्रेणेति शेषः । प्रेम दर्शनादिगतो भावव्यञ्जकः कश्चन विशेषः । तत्पूर्वको वशीकारः प्रणयः । परिचयो रहस्यवेदनम् । मयि भवेयुरिति—आश्वासकाङ्क्षा धन्य एवाहं यदि तद्विषयः स्यामित्याकूतध्वननम् । लयस्तन्मयत्वम् । बाला नेच्छति न बहु मन्यते । प्रक्रम उपक्रमः । इति प्रकारे । निशान्तं गृहम् । वृत्तविवर्त्तनव्यतिकरा पुनः-

---

(१)—'हरज्ञानी'ति वा पाठः । एवमुत्तरत्र ।

(२) 'सहसे'त्यहृद्यतरो वैकल्पिकः पाठः ।

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥३४॥

प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते?॥३५॥

---

पुनःप्रवृत्तपार्श्वपरिवर्त्तना। एतत्प्रवासोदाहरणं कुतो न स्यादित्याह—एषेति—प्रकरणवशादवसेयेति शेषः। सखीनां भावः सख्यं सौहार्द्यं, तेनोपदेशः, तद्विना तदभावे। सविभ्रमाङ्गवलनादिभिर्वक्रोक्तिभिश्च संसूचनं मानोच्चारणम्। केवलमेवेति समुदितो निपातः(१)। अश्रुपदमत्र कज्जलादिमिलितनेत्रजले, तेनोदकैरिति सङ्गच्छते। गन्तव्य इति—भावे कृत्यः। तेन गमन उपस्थिते सतीत्यर्थः। जीवितेति सम्बुद्धिः(२)।

---

(१) एवमापातत एकपर्यायभूतस्याव्ययद्वयस्यैकत्रावस्थितिः समाधेयेति टीकाकृत्स्वरसः। अन्यथा पुनरुक्तत्वापत्तेः। केवलं प्राधान्येन रोदनमेव नत्वन्यत्किञ्चिदिति तु नासुगमो व्याख्यामार्गः।

(२) अत्र जीवित प्रिय इत्युभयत्र पदच्छेद इत्याशयः। एवमपि श्रीधरमाणिक्यचन्दौ। अत्र साहित्यचूडामणिः—'सुहृत्सार्थ इत्यस्य प्रियसख इत्यनेन पौनरुक्त्यं दुष्परिहरम्। प्रियेति पृथक्पदं सम्बुद्ध्यन्तं, जीवितविशेषणम्, अतो न पौनरुक्त्यमित्येके, तदसत्, सुहृत्सखिशब्दयोः पौनरुक्त्यस्य तादवस्थ्यात्'।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानन्ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥३६॥

त्वामिति—कृतान्तो दैवं, क्रूरः श्रेयोविघटनजागरूकः। अत्राकृतिलिखनात्कथञ्चिन्निर्वाह्यपादपतनारम्भेऽप्यत्रै[-वा]सरसमये त्वदीयविलासविशेषसमुद्दीपितशोकावेशविधुरस्य मम बाष्पैर्दर्शनविधानद्वारा विघ्नः क्रियत इति सर्वतन्त्रविदो वाचस्पतिमिश्राः(१)। आधुनिकास्तु लिखनमपीच्छाविषय एव, न तु निर्व्यूढ़-

(१) अत्र श्रीधरसिद्धान्तो यथा..."शिलापदेन लिखनयोग्यता। लिखतोऽपि ममाश्रणि निर्गतान्येव, तानि तु दृष्टिपिधानमिव कृतवन्ति, किन्तु मुहुर्मुखप्रोञ्छनेनापास्य कथं कथमपि लिखननिर्वाहः। इदानीन्तु प्रणामकालीयममात्रे स्मृततच्चिन्ताविह्वलान्तःकरणस्य मम वारं वारं प्रवाहरूपतामापन्नैरश्रुभिः समन्ताद्दृष्टिर्लुप्यत इति वाचस्पतिमिश्राः। (चण्डीदासोद्धृतं वाचस्पतिमिश्रमन्तव्यमितो भाषया किञ्चिद्भिन्नम्। अत्रायं प्रश्नः प्रसङ्गोत्थः—वाचस्पतिमिश्रकृता प्राचीनतरा काव्यप्रकाशटीका (याऽधुना लुप्तैव) किं चण्डीदाससमयेऽपि विरलप्रचाराऽऽसीत्? उत चण्डीदासः स्मृतिनिर्मोषनिर्यन्त्रितो वा तात्पर्यप्रकटनपरो वा भिन्नमेव सन्दर्भमुद्धरति?) जानाम्येव यथा प्रणयरोषेर्ष्याव्यवहितेषु विलासेषु मम बाष्पतरलितं चक्षुर्भवतीति...मे इति पदशक्त्या व्यज्यते। अन्यथाऽऽत्मानमिच्छामीत्युपक्रमणे नौ इत्युपसंहारे च प्राप्तत्वाद्व्यर्थताऽऽपत्तिरिति काश्मीरकाः। (काश्मीरकचक्रकृते सङ्केते नेदमुपलभ्यते। तदर्वाचीनानां काश्मीरकाणां सिद्धान्तित

हास्यादीनां क्रमेणोदाहरणम्-

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।

---

मिति मन्यन्ते । अत्र च त्वामिति निर्दिष्टनायिकाऽऽलम्बनं, कल्पनाबीजं पूर्वप्रणयकोपस्मरणं, प्राकरणिकश्च मेघोदयादि-रुद्दीपनं, लिखितबाष्पश्चानुभावः, सञ्चारिणस्तु स्मृतिशोकदैन्या-दयः । एतैः प्रतीयमानैर्यत्नेऽनुमीयमाना रतिः सहृदयहृदय-लीनां वासनामुद्बोध्य निखिले तदाकारार्थसिद्धसान्द्रानन्दास्वादे पर्यवस्यतीति-एषैव सर्वत्र रीतिः । अत्र च प्रबन्धपर्यालोचनया विप्रलम्भसञ्चार्युन्माद एवोद्रिक्त इति नेदं रसध्वन्युदाहरणं यद्यपि तथाप्येतन्मात्रानुसन्धाने नोन्मादावभासः स्फुट इत्य-

---

मत्र परामृष्टं भवति । नामतोऽपि तेषामिदानीं नोपलम्भ इति महद् दुर्दैवशासम् )। वयन्तु ब्रूमः-यावदेवैतत्सर्वं कर्त्तुमिच्छामि तावत्सं-कल्पविषय एव प्रलापसमयानुभूतकृतककोपप्रसादसम्भेदात्मकस्मृत-तच्चेष्टाविह्वलस्य ममाविर्भूतैरश्रुभिर्दृष्टिरालुप्यते । तच्चित्रलिखिताया अपि तावदास्तां दर्शनविनोदादिकं यावत्तल्लिखनोचितरेखोपरेखाऽऽ-दिसूत्रमपि सङ्गमं न सहत इति । अतएव कृतान्तस्यापि पुनः क्रूर इति विशेषणम् । दैवमपि शापमन्तरेण नतन्मिथुनविघटने पटीय इति यथाऽत्र रतिरतितरामुद्दीप्ता तथाऽऽलेख्यादिरूपस्यापि समागमस्य विप्रयोग इति विप्रलम्भोऽपि परं पारमाश्रयत' इति । आधुनिका इति पदेन चण्डीदासेन श्रीधराचार्या एव विवक्षिताः । वाचस्पतिमिश्र-संक्रान्तं समालोचनमन्यत्र कृतमित्यत्र विरम्यते ।

तारस्वनं प्रथितथूत्क(१)-मदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥३७॥
हा मातस्त्वरिताऽसि(२)कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घर(३) मध्यरुद्धकरुणाः पौराङ्गनानां गिर
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥३८॥

भिप्रेत्योदाहृतम्(४) । प्रतिपदमेकैकेन मन्त्रपदेन संस्कृत्य सिक्तैः पृषतैर्बिन्दुभिः, तारस्वरं यथा स्यात्तथा प्रहितं सर्वादिक्प्रेषितं थूदिति शब्दो यत्र प्रहारे तत्र । विष्णुशर्माऽऽलम्बनं, रोदनवैचित्र्यादिरुद्दीपनं, सामर्थ्यलक्ष्या वैहासिकगताः कपोलस्पर्शदृष्टिसङ्कोचादयोऽनुभावाः । अवहित्थादर्पग्लान्यादयः सञ्चारिणो नोपात्ताः । कुत्र कस्मिन् गन्तव्ये त्वरिताऽसि येनास्मान्सततभक्तानपि नापेक्षसे । अशनिरूपो हुतवहः । दृशाविति—दृशाः पूर्वपरिचितलावण्यलहरीसंवलिततत्तदपाङ्गतरङ्गणादिवैचित्र्याद्विशेषोक्तिः । मध्यरुद्धा मध्य अर्द्धे रुद्धा विच्छिन्नाः बाष्पोदयसंवृतकण्ठतया । अत्र लोकान्तरगतनायिकाऽऽलम्बनं,

---

(१) 'शूत्क'मिति क्वाचित्कः पाठः ।

(२) 'स्वमिताऽस्सी'ति वा पाठः ।

(३) 'गद्गदरुद्धे'ति वा पाठः ।

(४) "मात्रानुसन्धानेनोन्मादाभास एवे"त्युदाहरणचन्द्रिकाकारसम्मतश्चण्डीदासग्रन्थे पाठः । रसनिष्पत्तिनिर्धारणप्रस्तावे रसध्वन्युदाहरणमेव सम्मतमिति तथा निर्देशः ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥३९॥

क्षुद्राः संत्रासमेते(१) विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे! तिष्ठ पात्रं त्वमसि न हि रुषां(२)नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्ग-(३)लीलानियमितजलधिं राममन्वेषयामि४०
ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः(४)

तत्रेहेऽग्निपतनादिरुद्दीपनम्, अश्रुतद्गुणवर्णनप्लुतकरुणस्वर-स्तम्भादिरनुभावः; तत्प्रकाशितो निर्वेदः सञ्चारी(५) । कृत-मिति-अत्र पितृवैरिण आलम्बनम्, अनुमत्यादय उद्दीपनं, प्रतिज्ञाग्रहणं तत्सहचराश्च भृकुटीदन्तौष्ठपीडनादयोऽनुभावाः, उत्साहौग्र्यादयः संचारिणः। अत्र रक्ताङ्गनेत्रता युद्धवीरभेदिनी। क्षुद्रा इति-परं लज्जां दधति, अतादृक्कार्यनिष्पत्त्या लज्जिता

(१) 'त्रासमेन'मिति कुत्रापि पाठः।

(२) 'रुषा नन्वह'मिति वैकल्पिकः पाठः।

(३) 'किञ्चित्'संरम्भेति—'भ्रूभङ्गसंज्ञे'ति वा पाठः ।

(४) 'दत्तदृष्टि'रिति वा पाठः ।

(५) 'काश्मोरराजमातृमरणे भट्टनारायणकविकाव्यमिद'-मिति प्रकरणनिर्देशो माणिक्यचन्द्रकृते सङ्केते ।

पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥४१॥
उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि(१)मांसान्यं-
सस्फिकपृष्ठपिण्डा(२)द्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः (३)पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥४२॥
चित्रं महानेष बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः॥४३

---

इव कृतकार्या अपि न मामानन्दयन्तीत्यर्थः(४) । ग्रीवेति-मृगानुसारिणो राज्ञ उक्तिः । पश्चादर्द्धं पश्चार्द्धं निपातः । उत्कृत्येत्यादि-उच्छोथ उच्छलता । पिण्डं जङ्घार्धविभागः । उग्रपूतीन्युत्कटदुर्गन्धानि । रङ्कश्चिरक्षुधितः । करङ्कोऽस्थिशेषं शिरः । स्थपुटो विकटगभीरभागः । चित्रमिति-अत्र बतेत्यादीनां चित्रमित्यादिपूर्वपूर्वपदाहितसंस्कारसाहित्येन शक्तिदार्ढ्यं द्रष्टव्यम् । भङ्गिर्व्यवस्थितिः । सृज्यत इति सर्गः ।

---

(१) 'पृथूच्छोथ', 'पृथूच्छोफ', 'पृथूच्छ्राये'ति वा पाठः ।
(२) 'पिण्ड्याद्यवयव', 'पीठाद्यवयवे'ति वा पाठः ।
(३) 'अन्तःपर्यस्त'–'आत्तस्नाय्व'ति वा पाठः ।
(४) हनूमन्नाटके रावणपुत्रस्य मेघनादस्येयमुक्तिः ।

एषां स्थायिभावानाह—

(४५) रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः ॥३०॥

स्पष्टम्(१) ।

---

हृदयङ्गमे वस्तुनि सुखोपायत्वसंवेदनं रतिः । वागादिवैकृतैश्चेतोविकाशो हासः । इष्टनाशादिभयाच्चेतोद्रुतिः शोकः । प्रतिकूलेषु तैक्ष्ण्यप्रबोधः क्रोधः । कार्यारम्भेष्वासङ्ग उत्साहः । रौद्रशक्त्या कृतं चित्तवैक्लव्यं भयम् । दोषदर्शनादिभिर्वस्तुनिन्दा जुगुप्सा । लोकोत्तरवस्तुदर्शनाच्चित्तविस्तारो विस्मयः(२) । व्यभिचारिण इति—प्रत्यभिज्ञायमानलौकिकदशाऽऽविर्भावतिरोभावस्वभावो व्रीडाऽऽदिरास्वादाङ्कुरणदशायां व्यभिचारीत्युच्यते । आस्वाददशायान्तु तस्य नानाऽऽकारकर्बुरितघनानन्दस्य द्वित्रिक्षणमात्रजीवितस्य, प्रबन्धेष्ववान्तरानेकवाक्यानां, मुक्तकादौ तु तस्यैव काव्यस्य, पुनः पुनर्भावनया सन्तन्यमानस्वरूपरूपस्यांशानां स्थायिसञ्चारिताविभागो नास्त्येव । अतएव मेघदूतादावुन्मादादिः सञ्चार्यन्तरानुगमसन्तन्यमानतालक्षणा-

---

( १ ) अत्र भट्टगोपालः—'स्पष्टमिति पाठप्रधानत्वात् प्रमेयस्य, यथासंख्येन योजनं तु स्पष्टतर'मिति ।

(२) रत्यादीनां स्थायिभावानां विस्तरत आलोचनं भरतनाट्यशास्त्रे सप्तमेऽध्याये । एषां प्राधान्यप्रकटनं च तत्रैव श्लोकमुखेन—"यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः । एवं हि सर्वभावानां भावः स्थायी महानिह ॥"



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, (किरणावलीभास्कर) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.

Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, (अद्वैतचिन्तामणि) [वेदान्त], by Raṅgoji Bhaṭṭa,

Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, (वेदान्तकल्पलतिका) [वेदान्त], by Madhusūdana Sarasvatī.

Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, (कुसुमाञ्जलिबोधिनी) [न्याय], a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.

Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra (रससार) [वैशेषिक], a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka (भावनाविवेक) [मीमांसा], by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.

Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, (योगिनीहृदयदीपिका) [तन्त्र], by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No. 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī (काव्यडाकिनी) [काव्यशास्त्र], by Gaṅgānanda Kavīndra.



Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā (भक्तिचन्द्रिका) [भक्ति], a Commentary on S'aṇḍilyas Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, (सिद्धान्तरत्न) [गौडीयवैष्णवदर्शन], by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A. Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, (श्रीविद्यारत्नसूत्र) [ तन्त्र ], by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste, Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, (रसप्रदीप) [अलङ्कार], by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, (सिद्धसिद्धान्तसंग्रह) [नाथमार्ग], by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, ( त्रिवेणिका ) [अलङ्कार], by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, ( Jñāna Khaṇḍa) (त्रिपुरारहस्य, ज्ञानखण्ड) [तान्त्रिकदर्शन],
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 15-( Part IV )—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, (काव्यविलास) [अलङ्कार], by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, (न्यायकलिका) [न्याय], by Bhatta Jayanta. Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A. D. Litt. Rs 0-14

No. 18-(Part I)-The Gorakṣa Siddhānta Saṅgraha. (गोरक्षसिद्धान्तसंग्रह) [नाथमार्ग], Ed. with a Prefatory Note by Gopinath Kaviraj, M. A., Rs. 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa (प्राकृतप्रकाश) [प्राकृतव्याकरण], by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda. Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19-( Part.II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20-The Mānsatattvaviveka ( मांसतत्त्वविवेक ) [ धर्मशास्त्र ], by Viśvanātha Nyāyapañchanana Bhaṭṭāchārya. Edited with Introduction etc. by Pandit Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā (न्यायसिद्धान्तमाला) [ न्याय ], by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya. Edited with Introduction etc. by Dr. Mangal Deva S'āstrī, M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-4

No. 21-( Part-II ) Ditto Ditto Rs. 2-0

No. 22-The Dharmānubandhi S'lokachaturdaśi ( धर्मानुबन्धिश्लोकचतुर्दशी) [धर्मशास्त्र], by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit. Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23-The Navarātrapradīpa (नवरात्रप्रदीप) [धर्मशास्त्र ], by Nanda Pandit Dharmādhikārī. Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit

College, Benares, with a Foreword by Pândit Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad (रामतापिनीयोपनिषद्) [उपनिषद्], with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā (सापिण्ड्यकल्पलतिका) [धर्मशास्त्र], by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā (मृगाङ्कलेखानाटिका) [नाटिका], by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27-The Vidvachcharita Pañchakam (विद्वच्चरितपञ्चकम्) [निबन्ध], By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Sarasvati Bhavana Library, Benares. With an Introduction by Gopināth Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0

No. 28-The Vrata Kos'a (व्रतकोश) [धर्मशास्त्र], by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā (वृत्तिदीपिका) [व्याकरण], By Mauni S'rī Kṛṣṇa Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-The Padārtha Maṇḍanam (पदार्थमण्डन) [वैशेषिक], By S'rī Veṇīdatta.

Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0–14

No. 31 ( Part I )–The Tantraratna ( तन्त्ररत्न ) [ मीमांसा ], by Pārtha Sārathi Mis'ra.

Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University Allahabad. Rs. 1–14

No. 31–( Part II ) Ditto. Ditto.

Edited by Pt. Gopāl S'āstri Nene, Govt. Sanskrit College, Benares.

No. 32–The Tattvasāra ( तत्त्वसार ) [ न्याय ], by Rākhāldasa Nyāyaratna.

Edited with Introduction etc. by Harihara S'astri, Benares Hindu University. Rs. 1–0.

No. 33–( Part I ) The Nyaya Kaustubha ( न्यायकौस्तुभ ) [ न्याय ], by Mahadeva Puntamkar.

Edited with Introduction etc. by Umes'a Miśra, M. A., Allahabad University, Allahabad. Rs. 3–4

No. 34–( Part I ) The Advaita Vidyātilakam ( अद्वैतविद्यातिलकम् ) [ शाङ्करवेदान्त ], by S'rī Samarapuṅgava Dīkṣita.

With a Commentary by S'rī Dharmayya Dīkṣita.

Edited with Introduction, etc, by Ganapati Lal Jha, M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares. Rs. 1–4

No. 35–The Dharma Vijaya Nāṭaka ( धर्मविजयनाटक ) [ नाटक ], by Bhūdeva S'ukla.

Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares. Rs. 1–4

No. 36–The Ānanda Kanda Champū ( आनन्दकन्दचम्पू ) [ चम्पू ], by Mitra Miśra.

Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares. Rs. 3–8

No. 37–The Upanidāna Sūtra ( उपनिदानसूत्रम् ) [ वेद ],

Edited with Introduction by Dr. Mangaldeva S'āstri, M. A., D. Phil. Rs. 1–0

No 38–The Kiraṇāvali prakās'a dīdhiti ( Guṇa ), ( किरणावलीप्रकाशदीधिति ) [ वैशेषिक ], by Raghunāth S'iromani.

Edited by Pandit Badrināth Sāstri, M. A., Lucknow University. Rs. 1–12

No. 39–The Rāma Vijaya Mahākāvya, ( रामविजयमहाकाव्य ) [ काव्य ], by Rupanātha.
Edited by Pt. Ganapatilal Jha, M. A. Rs. 2–0

No. 40–(Part I) The Kālatattva Vivechana (कालतत्त्वविवेचन) [धर्मशास्त्र], by Raghunātha Bhaṭṭa.
Edited with a Foreword by Gopinātha Kaviraja M.A. by Nanda Kishore S'arma Sāhityāchārya, Research Scholar, Sanskrit College, Benares. Rs. 4–0

No. 40 ( Part II ) Do Do

No. 41–(Part I) The Siddhānta Sārvabhauma (सिद्धान्तसार्वभौम) [ज्योतिष], by S'rī Munīśvara.
Edited with Introduction etc. by Jyautiṣâchārya Pandit Murlidhara Thakkura, late Sadholal Scholar, Sanskrit College, Benares. Rs 3–0

No. 42–The Bheda Siddhi (भेदसिद्धि) [न्याय], by Vis'vanātha Panchânana Bhaṭṭâchārya.
Edited with notes etc., by Nyāya Vyākaranāchārya Pandit Sûrya Nārāyaṇa S'ukla, Professor, Govt. Sanskrit College, Benares.

No. 43–( Part I ) The Smārtollāsa ( स्मार्तोल्लास ) [ कर्मकाण्ड ], by S'iva Prasāda.
Edited with Introduction, notes, etc, by Vedâchârya Pandit Bhagavat Prasad Miśra, Professor, Govt. Sanskrit College, Benares.

No. 44–( Part I ) S'ūdrāchâra S'iromani (शूद्राचारशिरोमणि) [धर्मशास्त्र].
Edited by Sāhityāchārya Pandit Narayan S'astri Khiste.

No. 45–( Part I ) Kiranâvalī Prakāśa (Guna) (किरणावली प्रकाश-गुण) [ वैशेषिक ], by Vardhamāna.
Edited with a Foreword by Pt. Gopinath Kaviraj, M., A., by Pandit Badrinath S'astri, M. A., Lucknow University.

No. 46–( Part I ) Kāvya prakāśa dīpikā (काव्यप्रकाशदीपिका) [अलङ्कार], by S'rī Chaṇḍī Dāsa.
Edited by S'rī S'ivaprasāda Bhaṭṭāchārya, M. A., Professor, Presidency College, Calcutta.

No. 47–Bhedajayaśrī ( भेदजयश्री ) [ माध्ववेदान्त ], by S'rī Tarkavāgīśa Bhaṭṭa Venīdattāchārya.
Edited with Introduction etc, by Pandit Tribhuvan prasad Upādhyāya, M. A., Inspector of Sanskrit Pāṭhashalas, United Provinces, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā-nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5.

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gangā-nātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G.L Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhāmaha and his Kāvyālaṅkāra, by Baṭukanātha S'armā and Baladeva Upādhyāya.

(b) Some variants in the readings of the Vais'eṣika Sūtras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayaṇa, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the word Parārdha, by Umes'a Mis'ra.

Vol. VIII.

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(d) Hari Svāmi, the commentator of S'atapatha Brāhmana and the date of Skanda Svami the commentator of the Ṛigveda, by Mangaladeva S'āstri.

(e) Mysticism in Veda, by Gopināth Kaviraj.

(f) The Deva dāsī: a brief history of the Institution, by Manmatha Nātha Roy.

Vol. IX (In progress)

(a) The Life of a Yogin, by Gopinātha Kavirāj.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES

( SANSKRIT )

## SARASVATALOKA

Edited by

GOPINATH KAVIRAJ, M. A.

Kirana 1 ( In progress )

(a) Mangalam, etc, by Nārāyaṇa S'āstri Khiste.

(b) Mimansaka mata saṃgraha, by Haranchndra Bhaṭṭācharya.

(c) S'rimad Ācharya Mandana Mis'ra by Chinna Swami S'astri

(d) Bhagavato Buddhasya Charitam Upades'as'cha : by Gopinatha Kaviraj.

Kirana I ( Supplement )

Sanskrita Kavi Parichaya-(Bharavi) by Nanda Kishore Sharma.

Kirana II ( In progress )

(a) S'āradā Prasādanam by Nārâyana S'āstri Khiste.

(b) Chūḍāmaṇi Dars'anam by S'as'adhara Tarkachūḍāmaṇi.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

